तस्य रूपं शरस्यासीद्धनुर्ज्यामण्डलान्तरे ।
द्योततो भास्करस्येव घनान्ते परिवेशिनः ॥ ११५
पार्षतेन परामृष्टं ज्वलन्तमिव तद्धनुः
अन्तकालमिव प्राप्तं मेनिरे वीक्ष्य सैनिकाः ॥ ११६
तमिषुं संहितं तेन भारद्वाजः प्रतापवान् ।
दृष्ट्वामन्यत देहस्य कालपर्यायमागतम् ॥ ११७
ततः स यत्नमातिष्ठदाचार्यस्तस्य वारणे ।
न चास्यास्त्राणि राजेन्द्र प्रादुरासन्महात्मनः ॥ ११८
तस्य त्वहानि चत्वारि क्षपा चैकास्यतो गता ।
तस्य चाह्नस्त्रिभागेन क्षयं जग्मुः पतत्रिणः ॥ ११९

स शरक्षयमासाद्य पुत्रशोकेन चार्दितः ।
विविधानां च दिव्यानामस्त्राणामप्रसन्नताम् ॥ १२०
उत्स्रष्टुकामः शस्त्राणि विप्रवाक्याभिचोदितः ।
तेजसा प्रेर्यमाणश्च युयुधे सोऽतिमानुषम् ॥ १२१
अथान्यत्स समादाय दिव्यमाङ्गिरसं धनुः ।
शरांश्च ब्रह्मदण्डाभान्धृष्टद्युम्नमयोधयत् ॥ १२२
ततस्तं शरवर्षेण महता समवाकिरत् ।
व्यशातयच्च संक्रुद्धो धृष्टद्युम्नममर्षणः ॥ १२३
तं शरं शतधा चास्य द्रोणश्छिच्छेद सायकैः ।
ध्वजं धनुश्च निशितैः सारथिं चाप्यपातयत् ॥ १२४　C. 7. 8169 B. 7. 191. 14 K. 7. 192. 14

-विध्यतः; G2 -तिष्ठतः; M1. 2 -विध्य[ M2 °ध्यं ]त्ते ( for -वेशिनः ).

116 For the sequence in B Dc1 Dn1, cf. v. l. 78. — c) K4 B Dc1 Dn D2–5 S ( G5 missing ) अनु- ( for इव ). — d) D5. 7. 8 प्रेक्ष्य; G2 M3. 5 तस्य ( for वीक्ष्य ).

117 For the sequence in B Dc1 Dn1, cf. v. l. 78. — a) K4 D1 संहतं; B Dc1 Dn D2–5. 7. 8 T G1. 2 M संधितं ( for संहितं ). G1 M दृष्ट्वा ( for तेन ). — c) G1 M3–5 त्यागे ( for दृष्ट्वा ). — d) M3–5 -पर्ययम्. D7. 8 आत्मनः; M3. 5 आगतः ( for °तम् ).

118 For the sequence in B Dc1 Dn1, cf. v. l. 78. — a) K2 समयम्; D2 संयतम्; Bom. ed. प्रयत्नम् ( for स यत्नम् ). D4. 5. 7. 8 ततः स्वयत्निवातिष्ठद्. — b) D4. 5. 7. 8 तं नि- ( for तस्य ). D3 दुर्वारस्य तु वारणे.

119 For the sequence in B Dc1 Dn1, cf. v. l. 78. — b) D8 वा ( for च ). D3 चैवास्यतो ( for चैका° ). Ś1 K3 G3. 4 M1. 3. 4 गताः ( for गता ). — For 119ab, B Dc1 Dn1 subst. :

1311* तस्य त्वहश्च रात्रिश्च शरानभ्यसतोऽगमत् ।

— c) K1 वाह्ना; Dn2 वाहुस् ( for चाह्नस् ). D7. 8 -भागांते ( for -भागेन ). D4 सत्यं वहुस्वभागेन ( sic ).

120 For the sequence in B Dc1 Dn1, cf. v. l. 78. — a) K1 आदाय ( for आसाद्य ). — b) K1 Dn2 चोदितः ( for चार्दितः ). — d) D2 शराणाम् ( for अस्त्रा° ). K4 B Dc1 Dn अप्रसादतः; D4. 5. 7. 8 चाप्रसन्नतां ( for अप्र° ).

121 For the sequence in B Dc1 Dn1, cf. v. l. 78. — a) K1 D4. 8 उत्सृष्टुकामः; K3 तत्स्रष्टु°; Dn2 उत्स्रष्ट° ( for उत्स्रष्टु° ). — b) K1. 2 D4. 8 -वाक्यानि ( for °भि- ). D2. 4. 5. 7. 8 -नोदितः ( for -चो° ). K4 B Dc1 Dn D3. 6 ऋषि( Dn2 D3. 6 विप्र )वाक्यप्रचो( D3 °णो )दितः. — c) K4 Dn2 D2. 4–8 पूर्यमाणस् ( for प्रेर्यमाणश् ). B Dc1 Dn D2. 4–8 तु ( for च ). — d) D6 सुपुवे ( for युयुधे ). G2 चाति- ( for सोऽति- ). B Dc1 Dn1 युयुधे न यथा पुरा.

122 a) B Dc1 Dn1 भूयश्चान्यत् ( for अथान्यत्स ).

123 b) D3 महात्मन् ( for महता ). Dc1 D4-6 समवाकिरन्; D3 °रयत् ( for °किरत् ). — c) D8 व्यसादयच्; T G3. 4 अशातयंश् ( for व्यशातयच् ). — d) B Dc1 Dn D3. 6 G2 M3–5 अमर्ष( D3 °र्षि )णं ( for °णः ). G1 M1. 2 धृष्टद्युम्नस्य तद्धनुः. — After 123, D7 ins. :

1312* ततश्च पार्षतो राजन्समाकृष्य धनुर्दृढम् ।
शरं मुमोच निशितं भारद्वाजजिघांसया ।

124 a) D6 स तथा ( for शतधा ). K3 तस्य ( for चास्य ). K4 B Dc1 Dn S ( G5 missing ) शरांश्च शतधा ( T G2 °तथा ) त( Dn2 चा )स्य. — b) D5 सारिप ( for सायकैः ). — c) S ( G5 missing ) रथं ( for ध्वजं ). G2 ध्वजं ( for धनुश् ). — d) Dn2 अभ्यपातयत्; D8 न्यपातयत् ( for अप्य° ). D4. 5. 8 सारथिं चास्य पातयत् ( D4 °न् ).

125 Dn2 om. 125ab. — a) D3 पुनश्च ( for प्रहस्य ). — b) D3 दृढम् ( for पुनर् ). Ś1 K1–3 D1. 6 आदत्त

C. 7. 8769
B. 7. 191. 15
K. 7. 192. 15

धृष्टद्युम्नः प्रहस्यान्यत्पुनरादाय कार्मुकम् ।
शितेन चैनं बाणेन प्रत्यविध्यत्तनान्तरे ॥ १२५
सोऽतिविद्धो महेष्वासः संभ्रान्त इव संयुगे ।
भल्लेन शितधारेण चिच्छेदास्य महद्धनुः ॥ १२६
यच्चास्य बाणं विकृतं धनूंषि च विशां पते ।
सर्वं संछिद्य दुर्धर्षो गदां खड्गमथापि च ॥ १२७
धृष्टद्युम्नं ततोऽविध्यन्नवभिर्निशितैः शरैः ।
जीवितान्तकरैः क्रुद्धः क्रुद्धरूपं परंतपः ॥ १२८
धृष्टद्युम्नरथस्याश्वान्स्वरथाश्वैर्महारथः ।
अमिश्रयदमेयात्मा ब्राह्ममस्त्रमुदीरयन् ॥ १२९
ते मिश्रा बह्वशोभन्त जवना वातरंहसः ।
पारावतसवर्णाश्च शोणाश्च भरतर्षभ ॥ १३०
यथा सविद्युतो मेघा नदन्तो जलदागमे ।
तथा रेजुर्महाराज मिश्रिता रणमूर्धनि ॥ १३१
ईषाबन्धं चक्रबन्धं रथबन्धं तथैव च ।
प्रणाशयदमेयात्मा धृष्टद्युम्नस्य स द्विजः ॥ १३२
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
उत्तमामापदं प्राप्य गदां वीरः परामृशत् ॥ १३३
तामस्य विशिखैस्तीक्ष्णैः क्षिप्यमाणां महारथः ।
निजघान शरैर्द्रोणः क्रुद्धः सत्यपराक्रमः ॥ १३४

---

(for आदाय). — c) D4-6 शतेन (for शि°). G1 M चैव (for चैनं).

126 b) B1 D1.5 [ऽ]संभ्रांत (for सं°). — c) D4-6.8 शत- (for शित-). — d) B Dc1 Dn T G2-4 पुनर्धनुः; D4.5.7.8 ततो धनुः; D6 महाधनुः; G1 M धनुः पुनः (for महद्धनुः).

127 a) Ś1 K1-3 D1.8 तं च; Dc1 Dn1 स च; D4.5 अथ; D7.8 तथा (for यच्च). B1.3 Dc1 Dn1 D2.4-8 T G1.3.4 M1.2 बाण- (for बाणं). Ś1 K1-3 D1 निष्कृत्य; D6-8 -निकरं (for विकृतं). — c) B Dc1 Dn D2 चिच्छेद; G2 संचित्य (for संछिद्य). D6 संछिद्य सर्वं दुर्धर्षो. — d) K4 अवाच्य च; B Dc1 Dn D2 च वर्जयन्; D6 च चर्म च; T G2-4 तथैव च (for अथापि च). K1 D4.7.8 वा (for च).

128 Dn2 om. $128^{a}$–$129^{b}$. G1 M om. 128. — a) B Dc1 Dn1 च विव्याध (for ततोऽविध्यन्). — b) D5 नवभिर्नतपर्वभिः. — c) D8 जीवनांत- (for जीवितान्त-). Dc1 D1 (before corr. as in text) -करः; D6 -कर- (for -करैः). Ś1 K3 क्रुद्धं; Dn1 lacuna (for क्रुद्धः). — d) Ś1 K1-3 B1 D1 क्रुद्धरूपः; Dn1 शुद्धरूपे; D4.5.7.8 घोररूपं; T G2-4 शिलाधौतैः (for क्रुद्धरूपं). K4 B3.4 Dn1 D5.8 G4 परंतप; D4 °तपं (for °तपः).

129 Dn3 om. $129^{ab}$ (cf. v. l. 128). — ab) D2.5 धृष्टद्युम्नो (for °द्युम्न-). K4 धृष्टद्युम्नोथ तस्याश्वान्; D6 धृष्टद्युम्नो रथाश्वांश्च. Ś1 K3 B5 Dn1 सरथाश्वैर्; D6 स महाश्वैर् (for स्वरथा°). D4 धृष्टद्युम्नोरथाश्वान्स रथांश्चैव महारथाः. — c) K4 B Dc1 Dn D2-8 व्या (B1.4 व्य)- मिश्रयद् (for अमि°). Ś1 K1-3 D1 विमृद्य (K1 °मर्द)- व्यप्रमेयात्मा. — d) D4-6 ब्राह्मयम् (for ब्राह्मम्). Ś1 K3 उदैरयत् (K3 °न्); Dn1 D1 उदीरयत्. K2 ब्राह्मयस्त्रं समुदीरयत्; D7.8 द्रोणो ब्रह्मविदुत्तमः.

130 b) T G3.4 वाजिनो (for जवना). — c) D4.6.7 पारापत- (for °वत-). D6 -सवर्णाश्वाः (for °र्णाश्च). — d) G1 M1.2 शोणाश्वा (for °श्च). D6 शोणाश्चैव नराधिप.

131 M3-5 om. 131. B5 om. $131^{b}$–$132^{c}$. — b) D6 नदंतो (for नदन्तो). — B2 reads $131^{c}$–$133^{d}$ on marg. — c) D6 तेश्वा (for रेजुर्). — d) D6 व्यामिश्रा (for मिश्रिता).

132 B5 om. $132^{abc}$ (cf. v. l. 131). B2 reads 132 on marg. — ab) K4 Dn1 D5.6 इषाबंधं (sic). B3.4 Dc1 Dn1 D2.4.5.7.8 रथ( D4.5.7.8 °थे )बन्धं चक्रबन्धं (by transp.). — D6 repeats $132^{cd}$ after $134^{ab}$. — c) Ś1 K1.3 B1-4 Dc1 Dn2 D1.3.7 M4.5 प्राणा( K1 D7 °ण )शयद्; D6 (first time) प्राच्यावयद्; G1 M1.2 व्यनाशयद् (for प्रणा°). — d) G2 वै (for स).

133 B2 reads 133 on marg. — a) G1.4 M सं- (for स). B Dc1 Dn1 पांचाल्यो (for विरथो). — b) D1 -शारथिः (for -सा°). B Dc1 Dn1 निकृत्तध्वजसारथिः. — cd) Dn1 transp. प्राप्य and वीरः. Ś1 K2.3 D1 प्राप्तो (for प्राप्य). D1.4 G3 वीर-; D6 गुर्वीं (for वीरः). Ś1 K1.4 B1.2 D1 परामृषत्.

134 a) D4.5.7.8 तामस्य निशितैर्बाणैः. — b) Dn1 D5 क्षिप्यमाणो; D6 कंप्यमानो. — After $134^{ab}$, D6 repeats $132^{cd}$. D6 om. $134^{cd}$.

तां दृष्ट्वा तु नरव्याघ्रो द्रोणेन निहतां शरैः ।
विमलं खड्गमादत्त शतचन्द्रं च भानुमत् ॥ १३५
असंशयं तथाभूते पाञ्चाल्यः साध्वमन्यत ।
वधमाचार्यमुख्यस्य प्राप्तकालं महात्मनः ॥ १३६
ततः स्वरथनीडस्थः स्वरथस्य रथेषया ।
अगच्छदसिमुद्यम्य शतचन्द्रं च भानुमत् ॥ १३७
चिकीर्षुर्दुष्करं कर्म धृष्टद्युम्नो महारथः ।
इयेष वक्षो भेत्तुं च भारद्वाजस्य संयुगे ॥ १३८
सोऽतिष्ठद्युगमध्ये वै युगसंनहनेषु च ।
शोणानां जघनार्धेषु तत्सैन्याः समपूजयन् ॥ १३९
तिष्ठतो युगपालीषु शोणानप्यधितिष्ठतः ।
नापश्यदन्तरं द्रोणस्तदद्भुतमिवाभवत् ॥ १४०
क्षिप्रं श्येनस्य चरतो यथैवामिषगृद्धिनः ।
तद्वदासीदभीसारो द्रोणं प्रार्थयतो रणे ॥ १४१
तस्याश्वान्रथशक्त्यासौ तदा क्रुद्धः पराक्रमी ।
सर्वानेकैकशो द्रोणः कपोताभानजीघनत् ॥ १४२
ते हता न्यपतन्भूमौ धृष्टद्युम्नस्य वाजिनः ।
शोणाश्च पर्यमुच्यन्त रथबन्धाद्विशां पते ॥ १४३

C. 7. 6787
B. 7. 191. 33
K. 7. 192. 33

---

135 [a]) K2 तं (for तां). B (except B4) Dc1 Dn1 S (G5 missing) तु दृष्ट्वा (by transp.); Dn2 D2.4.7.8 दृष्ट्वा स. Dn2 D3 नरव्याघ्र. D5 तां दृष्ट्वा निहतां वीरो. — [b]) S (except G2; G5 missing) विहतां (for नि°). G2 रणे (for शरैः). — [c]) D2.6 S (G5 missing) आदाय (for आदत्त). — [d]) D7.8 भास्वरं (for भानुमत्). D5 चर्म चादत्त भानुमत्.

136 K4 D1.2.4.5 om. (hapl.) 136–137. — [a]) D6 असंशये (for °शयं). Ś1 D3 तथाभूतः; Dn1 °भूतं (for °भूते). — [b]) K1 पांचालः. — [c]) Ś1 K3 -चर्यस्य (for -मुख्यस्य). — [d]) Ś1 K3 D6 महारथः; T G2–4 °मनाः (for °त्मनः). — After 136, T G2–4 read 142–148.

137 K4 D1.2.4.5 om. 137 (cf. v. l. 136). — [a]) B (except B4) Dc1 Dn1 D3 सरथ-; D7.8 चचार; T G2–4 तु रथ- (for स्वरथ-). B Dc1 Dn -नीडस्थं; T G2–4 -नीळं स; G1 M -नीळस्थः (for -नीडस्थः). — [b]) T G2–4 समारुह्य (for स्वरथस्य). K2 B4 रथेप्सया; B1–3.5 °शया; D3 रणेषया (for रथे°). — [c]) K1 अगच्छद्सिमुख्यस्य; D7.8 असिमुद्यम्य चागच्छत्. — [d]) = 135[d].

138 [a]) Dn2 D4.5.7.8 दुस्तरं (for दुष्करं). Dn2 D2.4.5 मोहाद् (for कर्म). — [b]) B5 महाबलः (for °रथः). — [c]) K4 B Dc1 Dn1 D2.6 स; D4 lacuna (for च).

139 [a]) T G2–4 अतिष्ठद् (for सोऽति°). M3–5 रथ- (for युग-). D3 -पक्षे (for -मध्ये). D4–8 तु (for वै). — [b]) K4 -संनिहतेषु; B4 D2–6 -संहननेषु (for -संनह°). — [c]) D5 शराणां (for शोणानां). Ś1 K (K5 missing) D1.3 शोणानां जघनांतेषु (Ś1 °तेष्वस्; K4 °नांते; D3 °धेंन); B Dc1 Dn1 जघनार्धे(B1 °नांगे)षु चाश्वानां. — [d]) Ś1 K (K5 missing) D1.3 T G2–4 तत्सैन्यान्यभ्य(D3 °भि)पूजयन्.

140 [a]) Ś1 K (K5 missing) D1 -पालेषु; Dn2 D2.4.5 -पाशेषु; D3 -पार्श्वेषु; D7.8 -पाशे तु; S (G5 missing) -पाळीषु (for -पालीषु). — [b]) K1.2 (marg. as in text) D5 अति-; D3 अव- (for अधि-). D5 शोणानामप्यतिष्ठतः; G1 M शोणाश्वानधितिष्ठतः. — [c]) D4.5.7.8 अंतरे.

141 [a]) G3 सैन्यस्य (for श्येनस्य). — [b]) Ś1 K3 -गृद्धिणः; D4.7.8 -गर्द्धिनः (for -गृद्धिनः). — [c]) D3 तथैव (for तद्वद्). Dn1 D5 अभिसारो; T G2.4 M3–5 अभिसरो (for अभीसारो). — [d]) B D (except D1) T1.2 (*inf. lin.*) द्रोणपार्षतयो रणे (D6 °योर्नृप).

142 T G2–4 read 142–148 after 136. — [a]) D5 वै; S (G5 missing) स (G2 [श्वा]शु) (for [श्व]सौ). B Dc1 Dn1 तस्य पारावतानश्वान् (B1 °तथिखान्). — [b]) D3 परंतप; G1 M1.2.4.5 परामृशत् (for पराक्रमी). B Dc1 Dn1 रथशक्त्या पराभिन(B4 °मृष)त्; T G2–4 रथाक्रुद्धः परामृशत्; M3 तदा क्रुद्धाद्विशां पते. — M3 om. (hapl.) 142[c]–143[d]. — [c]) D4.7 सर्वानैकैकशो द्रोणः. — [d]) Dn2 D2–5.7.8 नीलवर्णान् (for कपोताभान्). K4 अजीजनत्. B1–4 Dc1 Dn1 T G1.3.4 M (M3 om.) रक्तशोणान्विव(T G3.4 °न्विस-; M4.5 °न्व्यस)र्जयन् (Dn1 M4.5 °त्); B5 रक्तानश्वान्विवर्जयन्; D3 रक्तशोणोरजीघनत् (sic); G2 रक्तशोणानवर्जयत्.

143 For the sequence in T G2–4, cf. v. l. 142. D5 M8 om. 143 (for M3, cf. v. l. 142). — [a]) B Dc1 Dn1 S (M3 om.; G5 missing) शोणास्तु; Dn2 D2–4.6–8 °श्वाः (for °श्च). K1.2 शोणाश्च परिमुंचंत.

C. 7. 8768
B. 7. 191. 34
K. 7. 192. 34

तान्हयान्निहतान्दृष्ट्वा द्विजाग्र्येण स पार्षतः ।
नामृष्यत युधां श्रेष्ठो याज्ञसेनिर्महारथः ॥ १४४
विरथः स गृहीत्वा तु खड्गं खड्गभृतां वरः ।
द्रोणमभ्यपतद्राजन्वैनतेय इवोरगम् ॥ १४५
तस्य रूपं बभौ राजन्भारद्वाजं जिघांसतः ।
यथा रूपं परं विष्णोर्हिरण्यकशिपोर्वधे ॥ १४६
सोऽचरद्विविधान्मार्गान्प्रकारानेकविंशतिम् ।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतम् ॥ १४७
परिवृत्तं निवृत्तं च खड्गं चर्म च धारयन् ।
संपातं समुदीर्णं च दर्शयामास पार्षतः ॥ १४८
ततः शरसहस्रेण शतचन्द्रमपातयत् ।
खड्गं चर्म च संबाधे धृष्टद्युम्नस्य स द्विजः ॥ १४९
ते तु वैतस्तिका नाम शरा ह्यासन्नघातिनः ।
निकृष्टयुद्धे द्रोणस्य नान्येषां सन्ति ते शराः ॥ १५०
शारद्वतस्य पार्थस्य द्रौणेर्वैकर्तनस्य च ।
प्रद्युम्नयुयुधानाभ्यामभिमन्योश्च ते शराः ॥ १५१

---

— $^{d}$) $D_{4.6-8}$ रथवंशाद् (for °बन्धाद्).

144 For the sequence in T $G_{2-4}$, cf. v. l. 142. — $^{a}$) Ś$_{1}$ $K_{1-3}$ $D_{6}$ नाशितान् (for निहतान्). — $^{b}$) $K_{1}$ $Dn_{2}$ $D_{1.3.4.7.8}$ T $G_{4}$ द्विजाग्रेण; $D_{5}$ शोणाश्वेन. $D_{1}$ च (for स). — $^{d}$) $B_{5}$ S (except $M_{2}$; $G_{5}$ missing) महाबलः (for °रथः).

145 For the sequence in T $G_{2-4}$, cf. v. l. 142. — $^{a}$) $D_{3}$ सं- (for स). $B_{1}$ च; $D_{6}$ [अ]थ; T $G_{2.4}$ [आ]शु (for तु). — $^{b}$) $B_{2}$ -विशारदः; $D_{5.7.8}$ -भृतां वर. — $^{c}$) $K_{1.2}$ $D_{1.5}$ अभ्या($D_{5}$ °भ्य)पतद्; T $G_{2-4}$ अभ्यद्रवद् (for °पतद्).

146 For the sequence in T $G_{2-4}$, cf. v. l. 142. $G_{1-3}$ $M_{1.2}$ om. 146. — $^{a}$) $K_{1.2}$ om. (hapl.) from बभौ up to रूपं (in 146$^{c}$). $M_{3-5}$ तथा (for बभौ). Ś$_{1}$ $K_{3.4}$ $D_{1.6}$ तत्र (for राजन्). — $^{b}$) $D_{6}$ भारद्वाजजिघांसिनः. — $^{c}$) $K_{4}$ B $Dc_{1}$ Dn $G_{4}$ $M_{3.5}$ पुरा; $D_{3}$ बभौ; $M_{4}$ तथा (for परं). — $^{d}$) $B_{1.2}$ मृधे (for वधे).

147 For the sequence in T $G_{2-4}$, cf. v. l. 142. — $^{a}$) $K_{3}$ सोजरद्; $K_{4}$ $D_{6.8}$ सोचरन्; B $Dc_{1}$ Dn स तदा ($B_{1.3}$ °था) (for सोऽचरद्). — After 147$^{a}$, $D_{4}$ ins. 1314* and om. 147$^{b}$–148$^{d}$. — $^{b}$) $B_{1}$ पुरुषांश्चैक-; $B_{2-5}$ $Dc_{1}$ $Dn_{1}$ प्रवरांश्चैक-; $T_{2}$ (before corr.) $G_{1.3.4}$ $M_{1.2.4.5}$ (*sup. lin.*) प्रचारानेक-; $G_{3}$ प्रवरा° (for प्रकारा°). $Dn_{2}$ $D_{2.5.6.8}$ $G_{3}$ -विंशतिः; $G_{1}$ $M_{1.2}$ °तीन् (for °तिम्). — After 147$^{ab}$, N ($D_{4}$ om.; Ś$_{2}$ $K_{5}$ missing) ins.:

1313* दर्शयामास कौरव्य पार्षतो विचरन्रणे ।

[ $D_{6}$ व्यचरद् (for विचरन्). ]

— $^{d}$) $Dn_{2}$ आकृतं (for आप्लुतं). $Dc_{1}$ प्रभृतं; $D_{6}$ विसृतं (for प्र°). $B_{1-3.5}$ $Dc_{1}$ $Dn_{1}$ T $G_{2-4}$ $M_{1.2}$ स्थितं; $D_{2}$ तथा (for सृतम्).

148 For the sequence in T $G_{2-4}$, cf. v. l. 142. $D_{4}$ om. 148 (cf. v. l. 147). — $^{a}$) $D_{3}$ om. निवृत्तं. $K_{1}$ om. च. — $^{b}$) Dn $D_{5.7}$ खड्ग-; $D_{8}$ lacuna (for खड्गं). $D_{3}$ om. चर्म च. — $^{c}$) Ś$_{1}$ $K_{2}$ $Dc_{1}$ $Dn_{1}$ समुदीपं; $K_{1}$ $G_{1}$ $M_{1.2}$ °दीक्षं; $B_{1}$ °दीरं; $D_{1.3}$ °दीर्यं (for °दीर्णं). $D_{6}$ संपातं च समुडीपं (sic). — After 148, N (Ś$_{2}$ $K_{5}$ missing; $D_{4}$ after 147$^{a}$) ins.:

1314* भारतं कौशिकं चैव सात्वतं चैव शिक्षया ।
दर्शयन्व्यचरद्युद्धे द्रोणस्यान्तचिकीर्षया ।
चरतस्तस्य तान्मार्गान्विचित्रान्खड्गचर्मिणः ।
व्यस्मयन्त रणे योधा देवताश्च समागताः ।

[ $D_{4}$ om. from भारतं up to तान्मार्गान् (in the prior half of line 3). — (L. 1) Ś$_{1}$ $D_{1}$ कैशिकं (for कौ°). — (L. 2) Ś$_{1}$ $K_{1-3}$ $D_{1.3.5.7.8}$ अचरद् (for व्यच°). — (L. 3) $K_{1}$ $Dc_{1}$ $Dn_{2}$ $D_{1}$ तन्- (for तान्). $Dn_{2}$ खड्गचर्म च; $D_{6}$ खड्गचर्मणि (for °चर्मिणः). — $Dn_{2}$ om. line 4. —(L. 4) $D_{3}$ विस्मयंत. $D_{4}$ योद्धा (for योधा). $K_{1-3}$ $D_{1}$ दैवताश् (for दे°). ]

149 $Dn_{2}$ om. 149$^{ab}$. $D_{7}$ om. 149$^{b}$–150$^{c}$. — $^{b}$) $D_{1}$ अशातयत् (for अपा°). — $^{c}$) B $Dc_{1}$ $Dn_{1}$ T $G_{1-4}$ चर्म खड्गं (by transp.); $M_{1.2}$ खड्गचर्म. Ś$_{1}$ $K_{1-3}$ $D_{1}$ संबाधं; $D_{2.4-6.8}$ संचारे (for संबाधे).

150 $D_{7}$ om. 150$^{abc}$ (cf. v. l. 149). — $^{a}$) $K_{3}$ $G_{1}$ M ये (for ते). $D_{6}$ वैतिस्तिका. — $^{b}$) $D_{6}$ बाणा (for शरा). $K_{4}$ $Dn_{2}$ $D_{2.4-6.8}$ -योधिनः (for -घातिनः). B $Dc_{1}$ $Dn_{1}$ शरा आसन्नयोधिनः; $D_{3}$ शरा ह्यासन्निपातिनः; S ($G_{5}$ missing) बाणास्तस्यामितद्युतेः. — $^{c}$) $K_{3}$ निकृष्य युद्धं द्रोणस्य.

151 $D_{1}$ reads 151$^{ab}$ twice. $D_{6}$ repeats 151$^{a}$ after 151$^{d}$. — $^{b}$) $D_{1}$ (second time)$_{.4-8}$ द्रोण- (for द्रोणेर्). — For 151$^{ab}$, B $Dc_{1}$ $Dn_{1}$ subst.:

अथास्येषुं समाधत्त दृढं परमसंशितम् ।
अन्तेवासिनमाचार्यो जिघांसुः पुत्रसंमितम् ॥ १५२
तं शरैर्दशभिस्तीक्ष्णैश्चिच्छेद शिनिपुंगवः ।
पश्यतस्तव पुत्रस्य कर्णस्य च महात्मनः ।
ग्रस्तमाचार्यमुख्येन धृष्टद्युम्नममोचयत् ॥ १५३
चरन्तं रथमार्गेषु सात्यकिं सत्यविक्रमम् ।
द्रोणकर्णान्तरगतं कृपस्यापि च भारत ।
अपश्येतां महात्मानौ विष्वक्सेनधनंजयौ ॥ १५४
अपूजयेतां वार्ष्णेयं ब्रुवाणौ साधु साध्विति ।
दिव्यान्यस्त्राणि सर्वेषां युधि निघ्नन्तमच्युतम् ।
अभिपत्य ततः सेनां विष्वक्सेनधनंजयौ ॥ १५५
धनंजयस्ततः कृष्णमब्रवीत्पश्य केशव ।
आचार्यवरमुख्यानां मध्ये क्रीडन्मधूद्वहः ॥ १५६
आनन्दयति मां भूयः सात्यकिः सत्यविक्रमः ।
माद्रीपुत्रौ च भीमं च राजानं च युधिष्ठिरम् ॥ १५७
यच्छिक्षयानुद्धतः सन्रणे चरति सात्यकिः ।
महारथानुपक्रीडन्वृष्णीनां कीर्तिवर्धनः ॥ १५८
तमेते प्रतिनन्दन्ति सिद्धाः सैन्याश्च विस्मिताः ।
अजय्यं समरे दृष्ट्वा साधु साध्विति सात्वतम् ।
योधाश्चोभयतः सर्वे कर्मभिः समपूजयन् ॥ १५९

C. 7. 8808
B. 7. 191. 53
K. 7. 192. 51

इति श्रीमहाभारते द्रोणपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

---

1315* ऋते शारद्वतात्पार्थाद्द्रोणाद्वैकर्तनात्तथा ।

[ Dc1 Dn1 द्रोणाद्वैकर्तनात्कृपात् (for the post. half). ]

— d) B Dc1 Dn1 भारत (for ते शराः). G2 नान्येषां संति ते शराः ( = 150d ).

152 D6 om. 152a. — a) B2.4 G4 अ( B4 त )थान्येषुं; G2 तथास्येषुं ( for अ° ). Ś1 K ( K5 missing ) B4 D1 समादत्त. — b) G2 शरं ( for दृढं ). Ś1 -दंशितं; K1-3 D1 -दंसितं; K4 B Dc1 Dn1 -संमतं; Dn2 D2-5.7.8 -वेगिनं; D6 -शंसितं ( for -संशितम् ).

153 b) D4.5.7.8 शनिपुंगवः. — After 153ab, D8 ins. :

1316* पश्यतस्तस्य तान्मार्गान्विचित्रान्खड्गचर्मणि ।

— d) D6 हि ( for च ). — f) Ś1 K3 अचोदयत्; K4 अयोध° ( for अमोच° ).

154 a) Dn2 चरंत; T G2-4 व्यचरद् ( G4 °न् ); G1 M विचरन् ( for चरन्तं ). — b) D6 लघु- ( for सत्य- ). S ( G5 missing ) सात्यकिः सत्यविक्रमः. — c) G2 द्रोणकर्णांतरं गत्वा. — d) S ( G5 missing ) सात्यकिं ( G3 °कं ) ( for भारत ). D7.8 तं कृपस्यापि भारत.

155 K4 om. (hapl.) 155. — a) G1 आपूजयेतां. — b) G1 M ब्रुवंतौ ( for ब्रुवाणौ ). D4.5 सात्वतां ( D5 °तं ) ( for साध्विति ). — c) B5 सर्वाणि; T G2-4 चैतेषां ( for सर्वेषां ). — d) K1 निघ्नतम्. D4 युधि सत्यपराक्रमं; D5 युधि तेषां प्रमुंचतां. — T G2.3 om. 155ef. — e) D4.5.7.8 अभिगम्य ( for °पत्य ). B4 Dc1 Dn1 तेषां ( for सेनां ). G1.4 M1.3-5 नातिसर्तं( G4 °क्त )व्यमभूतां.

156 a) B Dc1 Dn -रथ- ( for -वर- ). — d) D2.4.5.7.8 G3.4 मधूद्वह ( sic ); T G2 यदूद्वह ( G2 °हः ).

157 a) S ( G5 missing ) स ( M1.2 सं- ) नंदयति ( for आनन्द° ). Ś1 K3 मे; K1.2 T मा ( for मां ). — b) B ( except B4 ) Dc1 Dn1 D1.3.6 S ( G5 missing ) सात्यकिः परवीरहा. — c) K4 Dn2 D3-5.7.8 M1.2 -पुत्रं ( for -पुत्रौ ). — d) Ś1 K ( K5 missing ) D1 धर्मराजं; Dn2 D2.4.5.7.8 नकुलं च ( for राजानं च ).

158 a) K1.2 Dn2 D3 यः ( for यत् ). D3 पूजयन् ( for शिक्षया ). Dc1 संयुतः ( for [अ]नुद्धतः ). D2 यं शिक्षयन्नृत्यति च; D4 यः शिक्षयन्निव रणे; D5 यः शिक्षयाधिको वीरो; D6 अनुनृत्यं रक्षतीव; D7.8 यः शिक्षयाधिकोतीव; S ( G5 missing ) अनुद्धतः शिक्षितवान् ( G1 M °वद् ). — b) Ś1 K3 राजेंद्र; D8 द्रोणे; S ( except M1.2; G5 missing ) रथे ( for रणे ). — c) D3 क्रीडयंश्च ( for उपक्रीडन् ). — d) Dn2 -वर्तनः ( sic ) ( for -वर्धनः ).

159 a) Dc1 D2 एतं; D4.6.7.8 एनं ( for एते ). T G2-4 M3-5 प्रत्यनंदत ( G4 °तः ) ( for प्रतिनन्दन्ति ). — b) M4 ( inf. lin. as in text ) साध्याश्च ( for सैन्याश्च ). — c) D3 असह्यं; D4 अजह्यं; D8 अजयं ( for °य्यं ). — d) B Dc1 Dn1 D5 सात्यकिं ( for सात्वतम् ). — e)

# १६५

C. 7. 6815
B. 7. 192. 7
K. 7. 193. 7

संजय उवाच ।
क्रूरमायोधनं जज्ञे तस्मिन्राजसमागमे ।
रुद्रस्येव हि क्रुद्धस्य निघ्नतस्तु पशून्यथा ॥ १
हस्तानामुत्तमाङ्गानां कार्मुकाणां च भारत ।

---

G1 M यौधाश्च. —$^f$) S (except M3-5; G5 missing) तमपूजयन् (for सम°).

Colophon: Ś2 K5 G5 missing. — *Sub-parvan:* B1.2 द्रोणवध. — *Day of Droṇa's Generalship:* K1 D1 पंचमे युद्धदिवसे; K3 D6 पंचमे दिवसे; K4 पंचमे दिवसयुद्धे; D5 पंचमे; T G3 पंचमेहनि. — *Adhy. name:* Bom. ed. संकुलयुद्धं. — *Adhy. no.* (figures, words or both): Dn1 191; D3 85; T G2.3 186; G1 M1.2 185; G4 187; M3-5 184. — *Śloka no.:* Dc1 Dn1 63.

## 165

☞ This adhy. is missing in K5 G5 (cf. v. l. 7. 125. 14; 137. 9).

1 Ś2 is missing up to $62^{ab}$ (cf. v. l. 7. 163. 38). T2 G2-4 M3-5 om. 1-13. — After the ref., N (Ś2 K5 missing) T1 ins.:

1317* सात्वतस्य तु तत्कर्म दृष्ट्वा दुर्योधनादयः ।
शैनेयं सर्वतः क्रुद्धा वारयामासुरञ्जसा ।
कृपकर्णौ च समरे पुत्राश्च तव मारिष ।
शैनेयं त्वरयाभ्येत्य विनिघ्नन्निशितैः शरैः ।
युधिष्ठिरस्ततो राजा माद्रीपुत्रौ च पाण्डवौ । [5]
भीमसेनश्च बलवान्सात्वतं पर्यवारयन् ।
कर्णश्च शरवर्षेण गौतमश्च महारथः ।
दुर्योधनादयस्ते च शैनेयं पर्यवारयन् ।
तां वृष्टिं सहसा राजन्नुत्थितां घोररूपिणीम् ।
वारयामास शैनेयो योधयंस्तान्महारथान् । [10]
तेषामस्त्राणि दिव्यानि संहितानि महात्मनाम् ।
वारयामास विधिवद्दिव्यैरस्त्रैर्महामृधे ।

[(L. 1) D6 च (for तु). —(L. 2) D3.6 ओजसा (for अञ्जसा). —(L. 3) K4 D2 कृपः (for कृप-). Dn2 D3-5.7.8 T1 कृपः कर्णोथ समरे (for the prior half). K3 Dn2 D2.4.5.7.8 T1 तव पुत्रा(K3 °त्र)श्च (by transp.). Ś1 K2.4 पुत्रश्च. D5 भारत (for मारिष). —(L. 4) D8 त्वरयावृत्य; D5 °रिताभेत्य; D6 °रिता गत्वा. D8 न्यानिघ्नन्; D6 [अ]भ्यनिघ्नन्. Ś1 K3 विन्य- घ्नंत शितैः शिरैः; K1.2 D1 व्य(D1 वि)निघ्नंत (K1 °ति) शितैः शरैः (for the post. half). —(L. 6) B Dc1 Dn1 सात्यकिं (for सात्वतं). Dc1 Dn1 समवारयन्; D5 पर्यरक्षयन्. —D7.8 om. (hapl.) lines 7-8. —(L. 7) D6 तु (for च). —(L. 8) Ś1 K (K5 missing) D1 सर्वे; Dn2 D2-6 T1 चैव (for ते च). —(L. 9) D6 तां दृष्ट्वा सहसा वृष्टिं (for the prior half). Dn1 D5.7 उच्छ्रितां; Dn2 om. (for उत्थितां). —D7.8 om. (hapl.) lines 10-11. —(L. 11) D4 घोराणि (for दिव्यानि). Dn2 D2 T1 संधितानि; D3.6 संह°; D5 सस्थि° (for संहि°). —(L. 12) D3.5.7.8 विविधैर् (for विधिवद्).]

—Whereas, after the ref., G1 M1.2 read $14^{ab}$ for the first time, repeating it in its proper place. After the first occurrence of $14^{ab}$, G1 M1.2 ins.:

1318* संप्रहृष्टाच्युतो दृष्ट्वा साधु साध्विति पूजयन् ।
तं यौधाश्चाभवन्सर्वे कर्मणानेन पूजयन् ।
एवमुक्त्वा महाराज वासुदेवं धनंजयः ।
प्रायात्तव बलं जिष्णुर्भारद्वाजरथं प्रति ।
तत्रासीद्भैरवो नादस्तावकानां जयैषिणाम् । [5]
समभिद्रवतां पार्थं दैत्यानामिव वासवम् ।
तत्राकरोन्महाराज महीं शोणितकर्दमाम् ।
प्राच्छिनच्चोत्तमाङ्गानि पार्थोऽश्वनरदन्तिनाम् ।

[(L. 1) G1 संप्रहृष्टोच्युतो दृष्ट्वा (for the prior half).]

—$^b$) Ś1 K3.4 B Dc1 (marg.) Dn2 D1 राजन्; D5.7 जन- (for राज-). G1 M1.2 तस्य राजन्पराक्रमे. —$^c$) D4 वै (for [इ]व). D4.6 च (for हि). G1 M1.2 रुद्रस्यातिप्ररुष्टस्य. —$^d$) Ś1 K1.2 D1 वै; K3 lacuna; K4 B2-4 Dc1 Dn T1 तान्; D3.6 G1 M1.2 च (for तु). B2-5 Dc1 Dn1 पुरा; D5 मृधे (for यथा). B1 निघ्नतस्तान्पुरा पशून्.

2 Ś2 missing; T2 G2-4 M3-5 om. 2 (cf. v. l. 1). —$^a$) D6 भग्नानाम् (for हस्ता°). —B2 reads $2^{bc}$ on marg. —$^b$) Some MSS. कार्मुकानां. G1 M1.2 संघशः (for भारत). —$^{cd}$) Dn1 om. (hapl.) चापविद्धानां चामराणां. G1 M1.2 क्षपविद्धानां (for चाप°). B Dc1 Dn1 संचयैः (for संयुगे). —After 2, Ś1 K (K5 missing) D

छत्राणां चापविद्धानां चामराणां च संयुगे ॥ २
भग्नचक्रै रथैश्चापि पातितैश्च महाध्वजैः ।
सादिभिश्च हतैः शूरैः संकीर्णा वसुधाभवत् ॥ ३
बाणपातनिकृत्तास्तु योधास्ते कुरुसत्तम ।
चेष्टन्तो विविधाश्चेष्टा व्यदृश्यन्त महाहवे ॥ ४
वर्तमाने तथा युद्धे घोरे देवासुरोपमे ।
अब्रवीत्क्षत्रियांस्तत्र धर्मराजो युधिष्ठिरः ।
अभिद्रवत संयत्ताः कुम्भयोनिं महारथाः ॥ ५
एष वै पार्षतो वीरो भारद्वाजेन संगतः ।
घटते च यथाशक्ति भारद्वाजस्य नाशने ॥ ६
यादृशानि हि रूपाणि दृश्यन्ते नो महारणे ।
अद्य द्रोणं रणे क्रुद्धः पातयिष्यति पार्षतः ।
ते यूयं सहिता भूत्वा कुम्भयोनिं परीप्सत ॥ ७
युधिष्ठिरसमाज्ञप्ताः सृञ्जयानां महारथाः ।
अभ्यद्रवन्त संयत्ता भारद्वाजं जिघांसवः ॥ ८
तान्समापततः सर्वान्भारद्वाजो महारथः ।
अभ्यद्रवत वेगेन मर्तव्यमिति निश्चितः ॥ ९
प्रयाते सत्यसंधे तु समकम्पत मेदिनी ।

C. 7. 8825
B. 7. 192. 17
K. 7. 193. 17

---

(except Dc1 Dn1) T1 ins.:

1319* राशयः स व्यदृश्यन्त तत्र तत्र रणाजिरे ।

[ Ś1 K (K5 missing) Dn2 D1. 3 समदृश्यंत (for स व्य°). T1 तव (for the first तत्र). ]

3 Ś2 missing; T2 G2–4 M3–5 om. 3 (cf. v. l. 1). —$^{a}$) D4 भग्नचक्र-; D6 भग्नैश्चक्रै. —$^{b}$) K1. 3 B4 Dc1 Dn2 D1. 3 T1 पतितैश्च; M1. 2 निपातित- (for पातितैश्च). Ś1 K1. 2 Dn2 D3. 4. 6–8 T1 महाभुजैः; K4 D5 °रथैः; D2 °गजैः (for °ध्वजैः). —$^{c}$) D3 सादितैश् (for °भिश्). D5. 6 हयैः (for हतैः). D4. 8 अश्वैः; D5 चापि (for शूरैः). —$^{d}$) D7 सात्यकिणा वसुधाधिप (sic).

4 Ś2 missing; T2 G2–4 M3–5 om. 4 (cf. v. l. 1). —$^{a}$) K1 -निवृत्तास्तु; K3 D1. 3 T1 -निकृंतास्तु; D4 -निकृत्यास्तु; D5 -निपातैस्तु; D3 -निकृत्तासु (for °त्तास्तु). G1 M1. 2 पार्थबाणनिकृत्ताश्च. —$^{b}$) Dn1 योधास्तु; D5 °नां; G1 M1. 2 यौधास्ते. Ś1 K3 योधास्ते भरतर्षभ. —$^{c}$) G1 M1. 2 कुर्वंतो (for चेष्टन्तो). K1 D5. 7. 8 विविधा. —$^{d}$) D3 व्यवर्तंत; G1 M1. 2 दृश्यंते स्म (for व्यदृश्यन्त). Ś1 K3 रणाजिरे; B1. 3 Dc1 Dn1 D6 G1 M1. 2 महारणे (for °हवे).

5 Ś2 missing; T2 G2–4 M3–5 om. 5 (cf. v. l. 1). —$^{a}$) K3 तदा; D3. 6 महा- (for तथा). D3 -घोरे (for युद्धे). —$^{b}$) D3 युद्धे (for घोरे). —$^{c}$) G1 M1. 2 अब्रवीत्क्षत्रियान्सर्वान्. — D6 om. 5$^{c}$–6$^{b}$. —$^{e}$) D4. 5 संयात (for संयत्ताः).

6 Ś2 missing; T2 G2–4 M3–5 om. 6 (cf. v. l. 1). D6 om. 6$^{ab}$ (cf. v. l. 5). —$^{a}$) K4 एको (for एष). K4 B D (D6 om.) T1 हि (for वै). G1 M1. 2 असौ हि पार्षतः शूरो. —$^{c}$) D3 यततेयं; G1 M1. 2 घटध्वं हि (for घटते च). K1 यथाशक्तिर्. —$^{d}$) B Dc1 Dn1 D4–8 T1 शासने; D3 G1 M1. 2 पातने (for नाशने).

7 Ś2 missing; T2 G2–4 M3–5 om. 7 (cf. v. l. 1). —$^{a}$) D2 च; D4. 7 ह; D5. 6. 8 [इ]ह (for हि). —$^{b}$) K4 B Dn2 D2. 8 T1 [ऽ]त्र; Dc1 Dn1 D6 G1 M1. 2 स्म (for नो). K1. 2 महामृधे (for °रणे). —$^{c}$) D1. 2 अथ (for अद्य). Dn2 T1 च संक्रुद्धः; D5. 7. 8 रथे क्रुद्धः; G1 M1. 2 रणे यादृग् (for रणे क्रुद्धः). —$^{d}$) K4 B Dc1 Dn घातयिष्यति; G1 M1. 2 निहनि° (for पातयि°). —$^{e}$) G1 M1. 2 गत्वा (for भूत्वा). —$^{f}$) D1. 6 परीप्सथ; D2 परीप्सया; D4. 5. 7. 8 परी(D7 °रि)प्सवः (for °प्सत). B Dc1 Dn T1 युध्यध्वं कुरुसंभवं; G1 M1. 2 पार्षतं चाभि(M1 °पि)रक्षथ.

8 Ś2 missing; T2 G2–4 M3–5 om. 8 (cf. v. l. 1). D4 om. (hapl.) 8. Before 8, D7. 8 ins. संजय उवाच. —$^{a}$) G1 M1. 2 आज्ञापितास्ते राज्ञा तु. —$^{c}$) K3 अभ्यद्रवत. K4 D1 संग्रामे (K4 °मं); D5. 7. 8 सहिता (for संयत्ता). G1 M1. 2 वेगेनाभ्यद्रवन्सर्वे. —$^{d}$) K1 B1. 2 Dn1 D2. 6 T1 भारद्वाज-. G1 M1. 2 युयुत्सवः (for जिघांसवः).

9 Ś2 missing; T2 G2–4 M3–5 om. 9 (cf. v. l. 1). —$^{a}$) G1 M1. 2 सहसा पततस्तांस्तु. —$^{b}$) D2. 8 महारथान्. —$^{c}$) K1 अत्यद्रवत; B1–3 Dc1 Dn D2. 4. 5. 7. 8 T1 G1 M1. 2 अभ्यवर्तंत (for °द्रवत). —$^{d}$) D5. 6 निश्चयः (for निश्चितः).

10 Ś2 missing; T2 G2–4 M3–5 om. 10 (cf. v. l. 1). —$^{b}$) G1 M1. 2 पांचालानां महारथे. — D3 om. 10$^{cd}$. —$^{c}$) Dn2 T1 ततो घोरास् (for सनिर्घातास्).

C. 7. 6825
B. 7. 192. 18
K. 7. 193. 17

ववुर्वाताः सनिर्घातास्त्रासयन्तो वरूथिनीम् ॥ १०
पपात महती चोल्का आदित्यान्निर्गतेव ह ।
दीपयन्तीव तापेन शंसन्तीव महद्भयम् ॥ ११
जज्वलुश्चैव शस्त्राणि भारद्वाजस्य मारिष ।
रथाः स्वनन्ति चात्यर्थं हयाश्चाश्रूण्यवासृजन् ॥ १२
हतौजा इव चाप्यासीद्भारद्वाजो महारथः ।
ऋषीणां ब्रह्मवादानां स्वर्गस्य गमनं प्रति ।
सुयुद्धेन ततः प्राणानुत्स्रष्टुमुपचक्रमे ॥ १३
ततश्चतुर्दिशं सैन्यैर्द्रुपदस्याभिसंवृतः ।
निर्दहन्क्षत्रियव्रातान्द्रोणः पर्यचरद्रणे ॥ १४
हत्वा विंशतिसाहस्रान्क्षत्रियानरिमर्दनः ।
दशायुतानि तीक्ष्णाग्रैरवधीद्विशिखैः शितैः ॥ १५
सोऽतिष्ठदाहवे यत्तो विधूम इव पावकः ।
क्षत्रियाणामभावाय ब्राह्ममात्मानमास्थितः ॥ १६
पाञ्चाल्यं विरथं भीमो हतसर्वायुधं वशी ।
अविषण्णं महात्मानं त्वरमाणः समभ्ययात् ॥ १७

---

G1 M1.2 उत्पाता अभवन्क्रूरास्. — d) K4 B Dc1 Dn D2.4-7 T1 त्रासयाना (for °यन्तो).

11 Ś2 missing; T2 G2-4 M3-5 om. 11 (cf. v. l. 1). — a) D6 वा (for च). — b) B Dc1 Dn1 निश्चरंस्युत; Dn2 D2 T1 निश्चरन्निव; D6 निःसरन्निव; G1 M1.2 निःसृताशनिः (for निर्गतेव ह). D3 हि (for ह). D4.5.8 दिव्यान्निश्चरतीव च; D7 [आ]दित्यान्निश्चरतीव च. — c) Dn2 D4.8 पातेन (for तापेन). B Dc1 Dn1 दीपयंती उभे सेने; D2.7 °यंती च पातेन; D5 °यंती पपातेव; G1 M1.2 °यन्निव ते सैन्यं. — d) K1 D4.6 T1 शंसतीव; D5 °ती च; G1 M1.2 °न्निव (for °न्तीव). B4 महाभयं.

12 Ś2 missing; T2 G2-4 M3-5 om. 12 (cf. v. l. 1). — a) D6 चास्त्राणि (for शस्त्राणि). — c) Ś1 K3 चात्यंतं (for चात्यर्थं). B Dc1 Dn1 रथाश्वास्तनता(Dc1 Dn1 °स्तु नभां)त्यर्थं (sic); D4 रथोस्वनत चात्यर्थं; D5 रथोस्वनवतश्चासीद्; G1 M1.2 रथश्चासीददत्यर्थं. — d) G1 M1.2 वाहाश् (for हयाश्). D5 अश्रूणि (for चा°). B1.3 Dc1 Dn1 G1 M1.2 [अ]वर्तयन्; Dn2 D2.4-8 T1 [अ]पातयन् (for [अ]वासृजन्).

13 Ś2 missing; T2 G2-4 M3-5 om. 13 (cf. v. l. 1). — a) Ś1 Dc1 D1.4.5.7.8 G1 M1.2 हृतौजा. — After 13ab, N (Ś2 K5 missing) T1 ins.:

1320* प्रास्फुरन्नयनं चास्य दाक्षिणो वाहुरेव च ।
विमनाश्चाभवद्युद्धे दृष्ट्वा पार्षतमग्रतः ।

[(L. 1) K2 चापि (for चास्य). B1 D3 दक्षिणं; D4 °णे (for °णो). K4 B (except B1) Dc1 Dn1 T1 वामं (K4 °म-) बाहुस्तथैव च (for the post. half). — (L. 2) T1 विमनस्को (for °नाश्च).]

— c) K4 B2-5 Dc1 Dn1 D3.5 T1 ब्रह्मवादी(B5 °दि)नां; D2 °वादे च; D7 °वादिश्च; D8 °वादांश्च; G1 M1.2 °सत्तानां (for °वादानां). D6 ऋषिवाक्यं तु तच्छ्रुत्वा. — d) D1.8 श्रुत्वा स्वर्गमनं प्रति. — e) D4 युयुधेन; G1 M1.2 अयुद्धेन (for सु°). K4 तदा (for ततः).

14 Ś2 missing (cf. v. l. 1). Before 14, G3.4 ins. संजयः. G1 M1.2 read 14ab for the first time after the ref. in 1. — a) K2.3 Dn1 D1 चतुर्दिशः. D4.5.7.8 T G1 (second time).2-4 M1.2 (last two second time) सैन्यं. — b) K1 D1 पांचाल्यस्य; K2 पंचालस्य; K3 G3.4 द्रौपदस्य; D6 पंचालैर् (for द्रुपदस्य). G1 (first time).3.4 M1.2 (last two first time) [अ]भिसंवृतं. D7.8 द्रौपदेयादिभिर्वृतं. — c) D6 -श्रेष्ठान्; T G1.3.4 M1.2 -व्रातं (for -व्रातान्). — d) D2 प्रेक्ष्यार्दयद्; D4 प्रेक्ष्योभवद्; D5 प्रेक्षोभयद्; D6.7 पर्यपतद् (for °चरद्).

15 Ś2 missing (cf. v. l. 1). M4 om. 15-16. — a) Dc1 (marg.) हयान् (for हत्वा). — c) Bom. ed.. करिणाम् (for तीक्ष्णाग्रैर्). — d) B5 G1 M1.2 शरैः; D6 पुनः; M3.5 वशी (for शितैः).

16 Ś2 missing (cf. v. l. 1). M4 om. 16 (cf. v. l. 15). — b) B Dc1 Dn1 D6 S (M4 om.; G5 missing) विधूमोग्निरिव ज्वलन्. — d) G1 M1.2 शास्त्रम् (for ब्राह्मम्). K4 B Dc1 Dn D3 ब्राह्मम(D3 °श)स्त्रं समास्थितः; T G3.4 M3.5 °मस्त्रमुपास्थि(T °श्रि)तः; G2 °मस्त्रमुदीरयन्.

17 Ś2 missing (cf. v. l. 1). — a) D3 विरथो. D6 T G3 भूमौ (for भीमो). — b) B Dc1 Dn1 बली (for वशी). — c) K4 D6 S (G5 missing) अविषह्यं; B Dc1 Dn D1 सुविषण्णं (for अ°). Ś1 K3 महाबाहुं (for °त्मानं). — d) Dc1 Dn1 D4.5 त्वरमाणं; T G3.4 युयुधानः (for त्वरमाणः).

18 Ś2 missing (cf. v. l. 1). — d) M3 अत्यंतम्

ततः स्वरथमारोप्य पाञ्चाल्यमरिमर्दनः ।
अब्रवीदभिसंप्रेक्ष्य द्रोणमस्यन्तमन्तिकात् ॥ १८
न त्वदन्य इहाचार्यं योद्धुमुत्सहते पुमान् ।
त्वरस्व प्राग्वधायैव त्वयि भारः समाहितः ॥ १९
स तथोक्तो महाबाहुः सर्वभारसहं नवम् ।
अभिपत्याददे क्षिप्रमायुधप्रवरं दृढम् ॥ २०
संरब्धश्च शरानस्यन्द्रोणं दुर्वारणं रणे ।
विवारयिषुराचार्यं शरवर्षैरवाकिरत् ॥ २१
तौ न्यवारयतां श्रेष्ठौ संरब्धौ रणशोभिनौ ।
उदीरयेतां ब्राह्माणि दिव्यान्यस्त्राण्यनेकशः ॥ २२
स महास्त्रैर्महाराज द्रोणमाच्छादयद्रणे ।
निहत्य सर्वाण्यस्त्राणि भारद्वाजस्य पार्षतः ॥ २३
स वसातीञ्शिबींश्चैव बाह्लीकान्कौरवानपि ।
रक्षिष्यमाणान्संग्रामे द्रोणं व्यधमदच्युतः ॥ २४
धृष्टद्युम्नस्तदा राजन्गभस्तिभिरिवांशुमान् ।
बभौ प्रच्छादयन्नाशाः शरजालैः समन्ततः ॥ २५
तस्य द्रोणो धनुश्छित्त्वा विद्ध्वा चैनं शिलीमुखैः ।
मर्माण्यभ्यहनद्भूयः स व्यथां परमामगात् ॥ २६
ततो भीमो दृढक्रोधो द्रोणस्याश्लिष्य तं रथम् ।
शनकैरिव राजेन्द्र द्रोणं वचनमब्रवीत् ॥ २७

C. 7. 8844
B. 7. 192. 36
K. 7. 193. 36

---

(for अस्यन्तम्).

19 Ś2 missing (cf. v. l. 1). — a) Dn2 D4.8 इव (for इह). M4 आचार्यः. — b) T G1.3.4 M सोढुम्; G2 द्रोणम् (for योद्धुम्). — c) D7.8 त्वं; T G3.4 द्राग् (for प्राग्). T G2–4 एष (for एव). B (except B5) Dc1 Dn1 G1 M त्वरस्व प्राग्वधादस्य (G1 M °देष).

20 Ś2 missing (cf. v. l. 1). — b) B2 रथं; B4 दृढं; Bom. ed. धनुः (for नवम्). — c) B Dc1 Dn1 प्रतिपद्य (Dn1 °त्य); T G1.3.4 M परिमृज्य; G2 प्रतिहत्य (for अभिपत्य). Ś1 आदधे. D5 प्रतिगृह्याह्वयामास. — D3 reads $20^{d}$–$21^{e}$ on marg. — d) Dn1 D1.3 G3 आयुधं. D1 परमं (for -प्रवरं). — After 20, D6 ins.: 1323*.

21 Ś2 missing (cf. v. l. 1). D3 reads $21^{abe}$ on marg. — a) D6 संरब्धस्य. D1 स (for च). Ś1 K1–3 संरब्धः स शरानस्य; K4 स शरानस्यनस्यन् (sic); M3.4 स संरब्धः शरानस्य. — b) D3 दुर्वारितं (for °रणं). D6 द्रोणस्यामिततेजसः. — c) K1.2 Dc1 Dn1 D1.3.6 G2 निवारयिषु(Dn1 °तु)र्; D5 विचारयिषुर्; G1 M निपात° (for विवार°). — d) D3 अथ बाणैर् (for शरवर्षैर्).

22 Ś2 missing (cf. v. l. 1). — a) Dn2 D4–8 निवारयतां; T G2–4 व्यवा(G3 व्यदा-; G4 विदा)र° (for न्यवार°). G1 M1.2 तौ निपत्य रथश्रेष्ठौ; M3–5 तावुभौ रथिनां श्रेष्ठौ. — b) D6 रथ-; G1 M1.2 शर- (for रण-). Dc1 D6.7 -शोभितौ; D2 G5 -शोभनौ. — cd) K1,2 D1 transp. ब्राह्माणि and दिव्यानि. D3–5.7.8 ब्राह्मयाणि; D6 ब्रह्मादीन्; G1.2 M ब्राह्मादि. D4.5.7.8 दिव्याणि. D6 अस्त्राणि रिपुघातिनौ.

23 Ś2 missing (cf. v. l. 1). — a) Dn2 महीपाल (for महाराज). — b) Ś1 K1–3 B3 Dn2 आच्छादयन्; D6 प्राच्छादयद्. — d) Dc1 Dn1 पृष्ठतः (for पार्षतः).

24 Ś2 missing (cf. v. l. 1). — a) B2–4 Dc1 Dn स वशाती(Dn2 °ता)न्; D5 स वसाताञ्; S (G5 missing) वसा(T °शा)तींश्च. Dc1 Dn1 D5 शिवांश्; G1 M1.2 शिवींश् (for शिबींश्). — b) Some MSS. बाह्लिकान्. — c) Ś1 (*sup. lin.*) रक्षिष्यमाणः संग्रामे; D5 रिरक्षयंतः सं°. — d) M3.5 द्रोणाद् (for द्रोणं). T G2 व्यथमद्.

25 Ś2 missing (cf. v. l. 1). — a) B Dc1 Dn1 T G2–4 M4 तथा; Dn2 D2.4.5.7.8 ततो (for तदा). — Dn2 om. $25^{c}$–$26^{d}$. — c) D4 ययौ प्र-; D3 स बभौ (for बभौ प्र-). Ś1 K1–3 D1–5.7.8 अश्वान् (for आशाः).

26 Ś2 missing (cf. v. l. 1). Dn2 om. 26 (cf. v. l. 25). — b) D2.4.6–8 चैव (for चैनं). — c) D4.5.7.8 G1 M1–3.5 मर्मणि. Ś1 K (K5 missing) D1.3 [अ]भ्य(K1 °त्य)वधीद्; D4.5 [अ]भिहनद् (for [अ]भ्य°). M4 om. भूयः. D6 मर्मण्यभिरते चैनं. — d) D3 G1 M1.2 परमां गतः; D4 °मागमत्. — After 26, B Dc1 Dn1 read 164. 78–121.

27 Ś2 missing (cf. v. l. 1). — a) D4 दृढक्रुद्धो; D6 भृशं क्रुद्धो; G1 M दृढक्रोधी. — b) K1 आक्लिश्य; G1 M आकृष्य (for आश्लिष्य). D7.8 द्रोणं संश्लिष्य तं रथं.

C. 7. 6945
B. 7. 192. 37
K. 7. 193. 37

यदि नाम न युध्येरञ्शिक्षिता ब्रह्मबन्धवः ।
स्वकर्मभिरसंतुष्टा न स्म क्षत्रं क्षयं व्रजेत् ॥ २८
अहिंसा सर्वभूतेषु धर्मं ज्यायस्तरं विदुः ।
तस्य च ब्राह्मणो मूलं भवांश्च ब्रह्मवित्तमः ॥ २९
श्वपाकवन्म्लेच्छगणान्हत्वा चान्यान्पृथग्विधान् ।
अज्ञानान्मूढवद्ब्रह्मन्पुत्रदारधनेप्सया ॥ ३०
एकस्यार्थे बहून्हत्वा पुत्रस्याधर्मविद्यथा ।
स्वकर्मस्थान्विकर्मस्थो न व्यपत्रपसे कथम् ॥ ३१
स चाद्य पतितः शेते पृष्ठेनावेदितस्तव ।
धर्मराजेन तद्वाक्यं नातिशङ्कितुमर्हसि ॥ ३२
एवमुक्तस्ततो द्रोणो भीमेनोत्सृज्य तद्धनुः ।
सर्वाण्यस्त्राणि धर्मात्मा हातुकामोऽभ्यभाषत ।
कर्ण कर्ण महेष्वास कृप दुर्योधनेति च ॥ ३३
संग्रामे क्रियतां यत्नो ब्रवीम्येष पुनः पुनः ।
पाण्डवेभ्यः शिवं वोऽस्तु शस्त्रमभ्युत्सृजाम्यहम् ॥ ३४
इति तत्र महाराज प्राक्रोशद्द्रौणिमेव च ।

---

28 Ś$_2$ missing ( cf. v. l. 1 ). —$^a$) D$_{5-7}$ G$_3$ युद्धेरन्. —$^c$) D$_{3-5}$ च संतुष्टा ( for असं° ). D$_6$ कर्मसु स्वेषु संतुष्टा. —$^d$) T G$_{3.4}$ हि ( for स्म ). Ś$_1$ K$_3$ न क्षत्रं प्रलयं व्रजेत्.

29 Ś$_2$ missing ( cf. v. l. 1 ). —$^a$) T G$_3$ M$_{4.5}$ अहिंसां. —$^b$) K$_{1-3}$ धर्म-. G$_1$ M$_2$ ज्यायस्करं; M$_3$ न्यायस्तरं. Ś$_1$ K ( K$_5$ missing ) D$_1$ भवेत् ( for विदुः ). Dn$_2$ D$_{3-5}$ धर्मस्यावि( D$_5$ °स्य वि )स्तरं विदुः; D$_{7.8}$ धर्मस्य परमं वपुः. —$^c$) D$_3$ हि ( for च ). Ś$_1$ K$_{2.4}$ B$_1$ Dc$_1$ Dn$_1$ D$_{1.6}$ M$_{4.5}$ ब्राह्मणा; K$_{1.3}$ ब्रह्मणा; M$_3$ ब्रह्मणो. —$^d$) Dn$_2$ D$_{2-5.7.8}$ हि ( for च ). D$_6$ भवान्ब्रह्मविदुत्तमः.

30 Ś$_2$ missing ( cf. v. l. 1 ). —$^b$) S ( G$_5$ missing ) प्राणीन् ( for चान्यान् ). — After 30$^{ab}$, T G$_{2-4}$ ins. :

1321* भरन्ति हि सुतान्दारांस्त्वद्वदज्ञानमोहिताः ।

—$^c$) D$_2$ ब्रह्मसूढत्वं; D$_5$ मूढब्रह्मत्वं ( for °वद्ब्रह्मन् ). —$^d$) Ś$_1$ K ( K$_6$ missing ) D$_{1.4.6.7.8}$ T G$_{2-4}$ -धनेच्छया ( for °प्सया ).

31 Ś$_2$ missing ( cf. v. l. 1 ). —$^a$) D$_{4.6}$ अन्यान्; D$_{7.8}$ अर्थान् ( for हत्वा ). —$^b$) K$_4$ Dn$_1$ D$_{1.2.8}$ [अ]धर्मविद्यया. — For 31$^{ab}$, D$_6$ S ( G$_5$ missing ) subst. :

1322* एकपुत्रस्य चार्थे त्वं बहून्निघ्नञ्जनाधिपान् ।

[ D$_6$ एकस्य पुत्रस्यार्थे त्वं ( for the prior half ). G$_1$ M$_{1.2}$ नराधिपान्. ]

—$^c$) M$_3$ स्वकर्मस्था विकर्मस्था. —$^d$) T G$_{3.4}$ [अ]पत्रपयसे; G$_1$ M$_{1.2}$ चापत्रपसे; M$_{3-5}$ [ए]वाप° ( for व्यप° ). G$_2$ नोपतापयसे नु किं. — D$_{7.8}$ ins. after 31 : D$_6$ after 20 :

1323* आचारहीन निर्लज्ज ब्रह्मबन्धो नराधम ।
इदानीं तिष्ठ दुर्बुद्धे न मे जीवन्गमिष्यसि ।

[ ( L. 1 ) D$_6$ आचार्य- ( for °र- ). D$_7$ नराधमः. ]

— D$_{6-8}$ cont. : K$_4$ Dc$_1$ Dn$_2$ D$_{1-5}$ T$_{1.2}$ ( marg. ) ins. after 31 :

1324* यस्यार्थे शस्त्रमादाय यमपेक्ष्य च जीवसि ।

[ D$_{3.7.8}$ यस्यार्थं. D$_3$ चास्त्रम् ( for शस्त्रम् ). D$_{1.8}$ आदत्से ( for आदाय ). ]

32 Ś$_2$ missing ( cf. v. l. 1 ). —$^a$) D$_4$ चाथ ( for चाद्य ). D$_4$ पततः ( for पतितः ). D$_6$ S ( G$_5$ missing ) स चासौ ( T °जौ ) निहतः शेते. —$^b$) Some MSS. पृष्ठेन. Dc$_1$ Dn$_1$ [अ]विदितस् ( for [आ]वे° ). D$_{3.4}$ पृष्टे नो ( D$_3$ °थिव्यां ) विदितस्तव; S ( G$_5$ missing ) तव पुत्रः सुमंदधीः. —$^c$) D$_{2.3.6-8}$ S ( G$_5$ missing ) धर्मराजस्य ( for °राजेन ). D$_{4.5}$ ग्राह्यं ( for वाक्यं ). —$^d$) Ś$_1$ K$_3$ नाप-; B Dn$_2$ D$_2$ नाभि-; D$_3$ न वि- ( for नाति- ).

33 Ś$_2$ missing ( cf. v. l. 1 ). —$^a$) K$_2$ उक्त्वा ( for उक्तस् ). D$_3$ तदा ( for ततो ). —$^b$) Ś$_1$ K ( K$_5$ missing ) D$_{1.4-8}$ S ( G$_5$ missing ) भीममुत्सृज्य ( for भीमेनो° ). — After 33$^{ab}$, S ( G$_5$ missing ) ins. :

1325* संन्यासाय शरीरस्य योक्ष्यमाणः स वै द्विजः ।

— Dn$_1$ om. 33$^{cdef}$. —$^d$) D$_6$ G$_1$ M$_{1.2}$ त्यक्तुकामो; G$_2$ मोक्तु° ( for हातु° ). — After 33$^{cd}$, S ( G$_5$ missing ) ins. :

1326* कर्णदुर्योधनौ राजंस्त्वरमाणः पराक्रमी ।

[ G$_1$ M स्मरमाणः ( for त्वर° ). ]

— Before 33$^{ef}$, T G$_{2-4}$ ins. द्रोणः.

34 Ś$_2$ missing ( cf. v. l. 1 ). T G$_{1-4}$ M$_{1.2}$ om. 34$^{ab}$. — For 34$^{ab}$, M$_{3-5}$ subst. :

उत्सृज्य च रणे शस्त्रं रथोपस्थे निवेश्य च ।
अभयं सर्वभूतानां प्रददौ योगयुक्तवान् ॥ ३५
तस्य तच्छिद्रमाज्ञाय धृष्टद्युम्नः समुत्थितः ।
खड्गी रथादवप्लुत्य सहसा द्रोणमभ्ययात् ॥ ३६
हाहाकृतानि भूतानि मानुषाणीतराणि च ।
द्रोणं तथागतं दृष्ट्वा धृष्टद्युम्नवशं गतम् ॥ ३७
हाहाकारं भृशं चक्रुरहो धिगिति चाब्रुवन् ।
द्रोणोऽपि शस्त्राण्युत्सृज्य परमं साम्यमास्थितः ॥ ३८
तथोक्त्वा योगमास्थाय ज्योतिर्भूतो महातपाः ।
दिवमाक्रामदाचार्यः सद्भिः सह दुराक्रमम् ॥ ३९

C. 7. 8861
B. 7. 192. 53
K. 7. 193. 54

---

1327* रणे कृतो मया यत्नो यन्मा बृथ सदा सदा ।

— c) B5 हि; Dn2 D1 च; D5 न (for वो). D6 स्वस्ति वः पांडुपुत्रेभ्यः. — d) D2. 4. 5. 7. 8 उत्सृज्य यामि (for अभ्युत्सृजामि). — After 34, M3–5 ins.:

1328* उत्सृजाम्येव वै प्राणानिद्दवं गच्छामि सांप्रतम् ।

35 Ś2 missing (cf. v. l. 1). T G1. 2. 4 M1. 2 read 35 after $37^{ab}$. — a) M3–5 इत्येवं समरे राजन्. — b) D5 द्रोणम्; D6 द्रोण (for द्रौणिम्). B1. 3 Dc1 आहवे (for एव च). S (G5 missing) द्रोणो धीमा( M3–5 °णः क्रोश )न्पुनः पुनः. — c) Ś1 Dn2 D2. 3 स उत्सृज्य; K2 स तूत्सृज्य; D1. 6 समुत्सृज्य (for उत्सृज्य च). D5. 8 स (for च). S (G5 missing) समरे (for च रणे). — d) Ś1 K2 D1 न्यवेश( D1 °श्य )त; K1 [s]त्यशेरत; K3 न्यवेश्य च; B Dn2 D2. 3 M3. 4 निविश्य च (for निवेश्य च). — e) S (G5 missing) -भूतेभ्यः (for -भूतानां). — f) M1. 2 प्रययौ (for प्रददौ). Ś1 K3 योगयुक्तवाक्; B Dc1 °युक्तवत्; D2. 4. 5 °मुक्तवान्; T G1–4 M1. 2 °वित्तदा; M3–5 °मास्थितः (for °युक्तवान्).

36 Ś2 missing (cf. v. l. 1). — a) G1 M1. 2. 4 आस्थाय (for आज्ञाय). — b) K4 B Dc1 Dn1 प्रतापवान्; D3 समुच्छ्रितः (for °त्थितः). D6 S (G5 missing) पञ्चगामेव स पार्षतः. — After $36^{ab}$, K4 B Dc1 Dn D1 ins.:

1329* सशरं तद्धनुर्घोरं संन्यस्याथ रथे ततः ।

— c) D3 रथी (for खड्गी). D7. 8 अवद्रुत्य (for °प्लुत्य). — After 36, S (G5 missing) ins.:

1330* प्रद्रुते त्वथ द्रोणाय धृष्टद्युम्ने महारथे ।

[ G2 विप्रद्रुतेथ द्रोणाय (for the prior half). ]

37 Ś2 missing (cf. v. l. 1). — b) D4. 5 स्थावराणि (for मानुषाणि). G2 तु (for च). D7. 8 मानुषाणां व( D7 त )राणि च. — After $37^{ab}$, T G1. 2. 4 M1. 2 read 35. G3 om. $37^{c}$–$38^{d}$. — c) D3 T G1. 2 M विचेतसं (G1 M1. 2 °नं) (for तथागतं).

38 Ś2 missing (cf. v. l. 1). G3 om. 38 (cf. v. l. 37). — a) T G2. 4 भयं (for भृशं). — b) Ś1 K (K5 missing) D1 सर्वशः; Dn1 चोक्तवान्; D4. 5 चाब्रवीत् (for चाब्रुवन्). — c) K3 B4 D6 T G1. 2 M शस्त्रमुत्सृज्य. — d) K4 परमां. K4 शांतिम्; B Dc1 Dn1 D4. 5 शाम्यम्; Dn2 D2 सांख्यम्; D7. 8 T G2. 4 M4 शमम्; G1 M1–3. 5 शौचम् (for साम्यम्). D1 परमाभ्यासमास्थितः; D6 °मात्मन्यवस्थितः.

39 Ś2 missing (cf. v. l. 1). — a) Ś1 K1. 2. 4 D1 तदुक्त्वा; B3. 5 तथोक्तो. — b) D2. 4 द्योतिर् (for ज्योतिर्). D5 भूत्वा (for भूतो). G1 M1. 2 महायशाः (for °तपाः). — After $39^{ab}$, K2 (marg.). 4 D (except Dn1) ins.:

1331* पुराणं पुरुषं विष्णुं जगाम मनसा परम् ।
सुखं किंचित्समुन्नाम्य विष्टभ्य उरमग्रतः ।
निमीलिताक्षः सत्त्वस्थो निक्षिप्य हृदि धारणाम् ।
ओमित्येकाक्षरं ब्रह्म ज्योतिर्भूतो महातपाः ।
स्मरित्वा देवदेवेशमक्षरं परमं प्रभुम् । [5]

[ (L. 1) K4 D1 यज्ञं (for विष्णुं). — Dc1 om. lines 2–4. — (L. 2) D7. 8 कायं (for सुखं). Dn2 D1. 4 समुन्नम्य. K2. 4 D1. 4. 6 विष्टभ्योरस्तथाग्रतः ( K4 °था कृतं; D1 °था कृतः ); D3 °भ्य चतुरोग्रतः (for the post. half). — (L. 3) K4 सत्त्वगो; D1 तत्त्वस्थो (for स°). K2 D4 धारणं. — (L. 4) K4 D1 व्याहरन्स्तिमितेंद्रियः; D7. 8 ज्योतिर्भूतं सनातनं (for the post. half). — K2 om. line 5. — (L. 5) D4. 5 स्मारितो; D7. 8 स्मरं( D7 °र )तं. ]

— D7. 8 cont.:

1332* निरावरणमाचार्यं पश्यामस्तदनन्तरम् ।

— c) K4 दिव्यम्. K2. 4 B1. 3–5 D (except D1) G1 M1. 2 आक्रमद् (for आक्रा°). — d) K2 सद्भिः स हि; K4 B5 Dn2 साक्षात्सद्भिर्; D2. 4. 5 सह सद्भिर् (by transp.); D7. 8 सर्वसद्भिर्. K3. 4 Dn2 दुराक्रमां ( Dn2 °मः ); B5 (marg.) महामतिः and also महाद्युतिः; D3 S (G5 missing) यथाक्रमं; D4. 5. 7. 8 दुरासदं ( D7 °दां; D3 °दः ) (for °क्रमम्). D6 योगमास्थाय केवलं. — After 39, S (G5 missing) ins.:

1333* मूर्धानं यस्य निर्भिद्य ज्योती राजन्महात्मनः ।

C. 7. 8861
B. 7. 192. 53
K. 7. 193. 56

द्वौ सूर्याविति नो बुद्धिरासीत्तस्मिंस्तथा गते ।
एकाग्रमिव चासीद्धि ज्योतिर्भिः पूरितं नभः ।
समपद्यत चार्काभे भारद्वाजनिशाकरे ॥ ४०
निमेषमात्रेण च तज्ज्योतिरन्तरधीयत ।
आसीत्किलकिलाशब्दः प्रहृष्टानां दिवौकसाम् ।
ब्रह्मलोकं गते द्रोणे धृष्टद्युम्ने च मोहिते ॥ ४१
वयमेव तदाद्राक्ष्म पञ्च मानुषयोनयः ।
योगयुक्तं महात्मानं गच्छन्तं परमां गतिम् ॥ ४२
अहं धनंजयः पार्थः कृपः शारद्वतो द्विजः ।
वासुदेवश्च वार्ष्णेयो धर्मराजश्च पाण्डवः ॥ ४३
अन्ये तु सर्वे नापश्यन्भारद्वाजस्य धीमतः ।
महिमानं महाराज योगमुक्तस्य गच्छतः ॥ ४४
गतिं परमिकां प्राप्तमजानन्तो नृयोनयः ।
नापश्यन्गच्छमानं हि तं सार्धमृषिपुंगवैः ।
आचार्यं योगमास्थाय ब्रह्मलोकमरिंदमम् ॥ ४५
वितुन्नाङ्गं शरशतैर्न्यस्तायुधमसृक्क्षरम् ।

---

जगाम परमं स्थानं देहं न्यस्य रथोत्तमे ।

40 Ś2 missing ( cf. v. l. 1 ). — $^{a}$) B ( except B2. 4 ) Dn1 D1 S ( G5 missing ) इव ( for इति ). D3 मे ( for नो ). D6 तत्र स्म ( for नो बुद्धिर् ). — $^{b}$) D6 युधिरासीत्तथागते ( sic ). — $^{c}$) D6 एकस्थम् ( for एकाग्रम् ). M3-5 चाकाशं ( for चासीद्धि ). K4 B Dc1 Dn1 D2 च ( for हि ). T G2-4 एकरूपमिवाभा( G2 °व ह्या )-सीज् . — $^{d}$) Dn2 M1. 2 पूजितं; G2 पूरयन् ( for पूरितं ). D6 जगत्; D7 मनः ( for नभः ). — D7. 8 read 40$^{ef}$ twice. — $^{e}$) D3 समापद्यत. Dn2 चार्काभं; D7. 8 ( both first time ) चा( D8 वा )काशं; S ( G5 missing ) चोल्काभं. Ś1 K1. 2 D6 सम( D6 °मा )पद्यत्तथार्काभं; K3 B Dc1 Dn1 D1 °पद्यद्थार्काभं; D4. 5 °पतत्तदा ( D5 °द्य तथा ) काले; D7. 8 ( both second time ) उदिते तु महाराज. — $^{f}$) Dn2 D3 -दिवाकरे ( Dn2 °रौ ) ( for -निशाकरे ). B Dc1 Dn1 S ( G5 missing ) द्रोणस्य निधने तदा ( B3-5 Dc1 Dn1 °था ); D1 भारद्वाजं निशाकरे; D7. 8 ( both first time ) तेजःपुंजसमावृतं.

41 Ś2 missing ( cf. v. l. 1 ). — $^{a}$) T G3. 4 तदा ( for च तज् ). — After 41$^{ab}$, D7 reads 42$^{c}$ for the first time, repeating it in its proper place. — $^{c}$) D6 -हृष्टः ( for -शब्दः ). Dn2 S ( G5 missing ) आसीत्किलि( Dn2 °स्कल )किलाशब्दः. — $^{d}$) D2 विशां पते ( for दिवौकसाम् ). — $^{e}$) Ś1 K1. 2 ब्रह्मलोक-. — $^{f}$) Dn2 मोदिते ( for मोहिते ). D6 धृष्टद्युम्नेन संगते.

42 Ś2 missing ( cf. v. l. 1 ). — $^{a}$) Ś1 K1 तद-( K1 °म )द्राक्ष्म; D4-8 तदाद्राक्षं ( D6. 7 °क्ष्यं ); T G1-4 M1. 2 तदा राजन्; M3-5 [अ]न्वपश्याम: ( for तदाद्राक्ष्म ). — $^{b}$) M3. 5 मानुष्ययोनयः. — D7 reads 42$^{c}$ for the first time after 41$^{ab}$.

43 Ś2 missing ( cf. v. l. 1 ). — $^{b}$) D3 तथा ( for द्विजः ). Ś1 K1-4 B Dc1 Dn D1-5, 7, 8 भारद्वाजस्य चात्मजः ( D2 वंशजः ). — $^{c}$) D5 तु ( for च ). — $^{d}$) B Dc1 Dn1 T G2-4 धर्मपुत्रश् ( for °राजश् ). Dn2 D2 [ऽ]थ ( for च ). G1 M1. 2 युधिष्ठिरः ( for च पाण्डवः ).

44 Ś2 missing ( cf. v. l. 1 ). — $^{a}$) Dn1 अन्यत्र ( for अन्ये तु ). D4. 5. 7. 8 सर्वे च ( for तु सर्वे ). Dn2 अन्यः सर्वे विनापश्यन्. — $^{b}$) D4 धर्मतः ( for धीमतः ). D6 देवगुह्यं परं महत्; S ( G5 missing ) देवगुह्यं तमु-( G1. 2 M1. 2 °ह्यमनु-; G4 °ह्यं तदु )त्तमं. — $^{c}$) D6 S ( G5 missing ) द्विजेंद्रस्य ( for महाराज ). — After 44, N ( Ś2 K5 missing ) ins. :

1334* ब्रह्मलोकं महद्दिव्यं देवगुह्यं हि तत्परम् ।

[ Ś1 K3 D6 हि तं; Dn2 D4. 5. 7 च तद्; D3 तु तद् ( for महद् ). B4 दीप्तं ( for दिव्यं ). K1. 2 D1 ब्रह्मलोकहितं दिव्यं; D8 °गुह्यं च तद्दिव्यं ( for the prior half ). D4 देवलोकं ( for °गुह्यं ). B3 Dc1 Dn1 D2. 4. 5. 7. 8 च ( for हि ). D3 यत्परं. ]

45 Ś2 missing ( cf. v. l. 1 ). — $^{a}$) Dn2 D3. 4. 5. 7. 8 एकां परां ( D7. 8 °रं ) ( for परमिकां ). D5 M1. 2 प्राप्ते. — $^{b}$) D5 ह्यजानंतो. K1. 8 D1. 7. 8 [ऽ]न्ययोनयः; Dn2 नृपोत्तमः; D4 व्यजानयं ( for नृयोनयः ). — $^{c}$) D6 तु ( for हि ). — $^{d}$) D8 तैः ( for तं ). D6 -सत्तमैः ( for -पुंगवैः ). — $^{f}$) Dc1 Dn D3-5 अरिंदम; D3 निनीषवः; G2 अनुत्तमं. T G3. 4 ब्रह्मलोकगतं विभुं.

46 Ś2 missing ( cf. v. l. 1 ). — $^{a}$) Ś1 K1 विभुन्नांगं; K2 D1. 4. 6 वितु( D4 °ध्य )न्नांगं; D2 किंतु°; D5 विध्यन्नांगैः; D7. 8 विभिन्नांगं ( for वितु° ). K2-4 B Dc1 Dn G2 शरव्रातैर्; D4. 7 शतशरैर् ( for शरशतैर् ). D3 पितुर्नासृष्यत वधं. — $^{b}$) Ś1 ( orig. ) अनक्षतं; Ś1 ( *sup. lin.* ) K4 D1. 4. 7. 8 अनक्षरं; K1 अ * क्षयं; K2 lacuna; K3 * * क्षतं; B5 अस्कृक्स्रुतं; Dn2 असृक्स्रुरं;

धिक्कृतः पार्षतस्तं तु सर्वभूतैः परामृशत् ॥ ४६
तस्य मूर्धानमालम्ब्य गतसत्त्वस्य देहिनः ।
किंचिदब्रुवतः कायाद्विचकर्तासिना शिरः ॥ ४७
हर्षेण महता युक्तो भारद्वाजे निपातिते ।
सिंहनादरवं चक्रे भ्रामयन्खड्गमाहवे ॥ ४८
आकर्णपलितः श्यामो वयसाशीतिपञ्चकः ।
त्वत्कृते व्यचरत्संख्ये स तु षोडशवर्षवत् ॥ ४९
उक्तवांश्च महाबाहुः कुन्तीपुत्रो धनंजयः ।

जीवन्तमानयाचार्यं मा वधीर्द्रुपदात्मज ॥ ५०
न हन्तव्यो न हन्तव्य इति ते सैनिकाश्च ह ।
उत्क्रोशन्नर्जुनश्चैव सानुक्रोशस्तमाद्रवत् ॥ ५१
क्रोशमानेऽर्जुने चैव पार्थिवेषु च सर्वशः ।
धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभम् ॥ ५२
शोणितेन परिक्लिन्नो रथाद्भूमिमरिंदमः ।
लोहिताङ्ग इवादित्यो दुर्दर्शः समपद्यत ।
एवं तं निहतं संख्ये ददृशे सैनिको जनः ॥ ५३

C. 7. 8877
B. 7. 192. 69
K. 7. 193. 71

D5 अरिंदम ( for असृक्क्षरम् ). D3 न्यस्तशस्त्रमुपागमत्; T G2–4 M5 ( *inf. lin.* as in text ) क्ष( G3 क्षु )रंतं रुधिरं बहु. — T G2–4 M3–5 ins. after 46[ab]: G1 M1. 2 cont. after 1336*:

1335* विकृष्य पार्षतः खड्गं क्रोधामर्षवशं गतः ।

— On the other hand, G1 M1. 2 ins. after 46[ab]:

1336* अभ्यद्रवत्स वेगेन पार्षतः खड्गचर्मभृत् ।
प्रद्रुतं त्वथ वेगेन तमाचार्यं जिघांसया ।
प्राक्रोशन्पाण्डवाः सर्वे फल्गुनश्चाद्रुतो रथात् ।
न हन्तव्यो न हन्तव्य इति ते सर्वतोऽब्रुवन् ।
क्रोशत्सु पाण्डवेयेषु अनुधावति फल्गुने । [5]
विकृतः सर्वभूतस्य ब्रह्मभूतं परामृशत् ।

[ ( L. 1 ) G1 अभ्यद्रवन्. — ( L. 4 ) M1. 2 इह ( for इति ). ]

— [c] ) D6 तत्र ( for तं तु ). S ( G5 missing ) दृश्य- ( M3–5 निंद्य )मानः सर्वभूतैः. — [d] ) D6 सर्वलोकैः; S ( G5 missing ) केशपक्षे ( for सर्वभूतैः ). Ś1 K1 B2 परामृषत्.

47 Ś2 missing ( cf. v. l. 1 ). — [a] ) Ś1 K1–3 B2 D2. 3 आलक्ष्य; K4 Dn2 D4. 5. 7. 8 आलोक्य ( for आलम्ब्य ). — [b] ) K4 Dn2 देहतः. G1 M1. 2 खड्गमुद्गृह्य पार्षतः. — [d] ) D6 शिरो व्यपचकर्त ह; S ( G5 missing ) शिरोऽभ्यव( T G3. 4 °रोस्य वि )चकर्त ह.

48 Ś2 missing ( cf. v. l. 1 ). T G2–4 M3–5 om. 48. — [a] ) D4 दूषणं ( for हर्षेण ). Dn1 युक्ते. — [b] ) Dn1 न पातिते ( for निपा° ). — [d] ) Ś1 K1. 2 भ्रमयन्. G1 M1. 2 उत्तमं ( for आहवे ).

49 = ( var. ) 103. Ś2 missing ( cf. v. l. 1 ). — [a] ) Ś1 K1–3 G1 M1. 2 आसन्न-; D5 आपन्न- ( for आकर्ण- ). — [b] ) B1. 3. 4 Dc1 Dn1 यो वर्षाशीतिको द्विजः; B2. 5 T G2–4 वयसाशीतिको द्विजः; G1 M °तिकात्परः. — [c] ) K1 Dn1 D4. 5. 8 व्यचरन्; D6 [ऽ]भ्यचरत् ( for व्यच° ). S ( G5 missing ) त्वत्कृते निधनं प्राप्तः. — [d] ) D3 वृद्धः ( for स तु ). Dn1 -वार्षिकः ( for -वर्षवत् ).

50 Ś2 missing ( cf. v. l. 1 ). — After 50[ab], D6 ins.:

1337* वाहयित्वा रथं तत्र मा द्रोणं घातयिष्यसि ।

— [c] ) D1–3 एनमाचार्यं; G1. 3. 4 मानया° ( for आनया° ). M3–5 जीवमानं समाचार्यं. — [d] ) Dn1 D4. 5 नावधीर् ( for मा वधीर् ).

51 Ś2 missing ( cf. v. l. 1 ). — [b] ) D3 [अ]ब्रुवन् ( for च ह ). — [c] ) Ś1 K3 प्राक्रोशन्; Dc1 Dn1 चुक्रो° ( for उत्क्रो° ). D3 स ( for [ए]व ). D5 उदक्रोशदर्जुनश्च. — D2 om. ( hapl. ) 51[d]–52[a]. — [d] ) K1 सानुक्रोशस्; M3–5 °क्रोशं ( for °क्रोशस् ). B Dc1 Dn1 D1 T G2–4 तमा( T G2–4 °था )व्रजत्; Dn2 D4. 5. 7. 8 तमब्रवीत्; D6 तमाह्वयत् ( for °द्रवत् ). D3 सानुजस्तमुपाद्रवत्.

52 Ś2 missing ( cf. v. l. 1 ). D2 om. 52[a] ( cf. v. l. 51 ). — [a] ) D5 क्रोधमाने. — [d] ) Dn2 G1 M1. 2 नरर्षभ.

53 Ś2 missing ( cf. v. l. 1 ). S ( G5 missing ) repeats 53[abcd] after 1340*. — [a] ) D3 लोहितेन ( for शोणि° ). S ( G5 missing ) ( all second time ) परिक्लिन्ना. S ( G5 missing ) ( all first time ) स हि तेन परिक्लिन्नो. — [b] ) Dn2 D1. 5–8 अथापतत्; D2 अपातयत् ( for अरिंदमः ). D4 रथाद्भूमिर्यथापतत् (sic); S ( G5 missing ) ( all second time ) रणभूमिश्च भारत. — [c] ) T G1. 3. 4 M1. 2 ( all second time ) लोहिताद्रिं; G2 ( second time )

य: शृणोति नरो भक्त्या ब्रह्महत्यां व्यपोहति ॥ २ ॥

अस्मिन्पर्वणि वृतान्तानि । द्रोणाभिषेकः । भगदत्तवधः । अभिमन्युवधः । अर्जुनप्रतिज्ञा । स्वप्नं । शतरुद्रियं । अर्जुनप्रवेशः । सात्यकिप्रवेशः । भीमसेनप्रवेशः । भूरिश्रवसो वधः । जयद्रथवधः । रात्रियुद्धं । घटोत्कचवधः । आचार्यधनुर्न्यासः । द्रोणवधः । अश्वत्थाम्नोतिक्रोधः । नारायणास्त्रमुक्तिः ॥ शतरुद्रियं चेति ॥ द्रोणपर्वणि ग्रन्थसंख्या ॥ ९९०० लक्ष्य तं संख्या ॥ छ ॥ श्रीरस्तु ॥ कल्याणमस्तु ॥

— D8 concludes with :

द्रोणपर्व समाप्तं ॥

य: शृणोति नरो भक्त्या यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः ॥ १ ॥
दिवा वा यदि वा रात्रौ संध्ययोरुभयोरपि ।
य: शृणोति नरो भक्त्या ब्रह्महत्यां व्यपोहति ॥ २ ॥

अस्मिन्पर्वणि वृतान्तानि ॥ द्रोणाभिषेकः । भगदत्तवधः । अभिमन्युवधः । अर्जुनप्रतिज्ञा । स्वप्नम् । शतरुद्रीयं । अर्जुनप्रवेशः । सात्यकिप्रवेशः । भीमसेनप्रवेशः । भूरिश्रवसवधः । षोडशराजकुलीयं । मृत्यूत्पत्तिकथनं । जयद्रथवधः । रात्रियुद्धं । घटोत्कचवधः । आचार्यधनुर्न्यासः । द्रोणवधः । अश्वत्थाम्नोतिक्रोधः । नारायणास्त्रमुक्तिः । शतरुद्रीयं चेति । एवं विंशतिर्वृत्तान्ताः ॥

समाप्तं द्रोणपर्व ॥ लेखकपाठकयोः शुभं भूयात् ॥ शुभं भवतु ॥ कल्याणमस्तु ॥ श्रीरस्तु ॥ श्रीः ॥ श्रीः ॥

संवत् १७९२ वर्षे भाद्रपदमासे शुक्लपक्षे दशम्यां भृगुवासरे लिखितमिदं द्रोणपर्व ॥

वंशीविभूषितकरान्नवनीलदाभा-
त्पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रा-
त्कृष्णात्परं किमपि तत्त्वमहं न जाने ॥ १
यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे सबहुश्रुतोऽयम् ।
पुण्यां च भारतकथां शृणुयाच्च नित्यं
तुल्यं फलं भवति तस्य च तस्य चेति ॥ २
द्वैपायनोष्ठपुटनिःसृतमप्रमेयं
पुण्यं पवित्रमथ पापहरं शिवं च ।
यो भारतं समधिगच्छति वाच्यमानं
किं तस्य पुष्करजलम[स्या]भिषेचनेन ॥ ३ ॥
मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ४ ॥

श्रीः ॥ श्रीः ॥ करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ॥ छ ॥ छ ॥

— T1 concludes with :

सप्तमं भारते पर्व महत्येतदुदाहृतम् ।
अध्यायानां शतं प्रोक्तमध्यायाः सप्ततिस्तथा ॥
दशश्लोकसहस्राणि नवश्लोकशतानि च ।
श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना ॥
ॐ ॥ नमः परमकल्याण नमस्ते विश्वमंगळे ।
वासुदेवाय शान्ताय यदूनां पतये नमः ॥
भग्नपृष्ठकटिग्रीवः स्तब्धदृष्टिरधोमुखः ।
कष्टेन लिखितं ग्रन्थं यत्नेन परिपालयेत् ॥
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।
द्रोणपर्व समाप्तम् ॥

— T2 concludes with :

सप्तमं भारते पर्व महत्येतदुदाहृतम् ।
अध्यायानां शतं प्रोक्तमध्यायाः सप्ततिः स्मृताः ॥
दशश्लोकसहस्राणि नवश्लोकशतानि च ।
श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना ॥
श्रीकृष्णदेवाय नमः ॥
ॐ नमः परमकल्याण नमस्ते विश्वमंगळ ।
वासुदेवाय शान्ताय यदूनां पतये नमः ॥
श्रीवेदव्यासाय नमः ॥ श्रीवासुदेवार्पणमस्तु ॥

— G1 concludes with :

द्रोणपर्व समाप्तं । श्रीगुरुभ्यो नमः । श्रीशुभमस्तु ॥

— G2 concludes with :

नागराजमुखैर्देवैर्नमितं नागभूषणम् ।
नाथं समस्तलोकानां नागतुण्डं नमाम्यहम् ॥
इति द्रोणपर्व समाप्तम् ॥

— G3 concludes with :

समाप्तं द्रोणपर्व ॥
सप्तमं भारते पर्व महदेतदुदाहृतम् ।
अध्यायानां शतं प्रोक्तमध्यायाः सप्ततिः स्मृताः ॥
दशश्लोकसहस्राणि नवश्लोकशतानि च ।
श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना ॥
पाराशर्येण मुनिना संचिन्त्य द्रोणपर्वणि ॥
हरिः ॐ ॥

— G4 concludes with :

द्रोणपर्व समाप्तं ॥
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।

कीलकवर्षे श्रावणि मासं २० ते दि तारीख एलिंदि मुडिंजद (विलिख्यावसितं) श्रीनिवासय्यंगारलिखितं ।

— M1 concludes with :

द्रोणपर्व समाप्तम् । शुभमस्तु ॥

— M2 concludes with :

द्रोणपर्व समाप्तम् । गुरुभ्यो नमः ।

१०२१ कोल्लवर्षे मेषमासं २५ तम दिने बुधवासरे अकत्तरण्डर अटि आकुंब्रोळ (शरीरच्छाया २३/४ पादप्रमाणा आसीत्तस्मिन्काले) कौण्वन्यजातिकणयाजात् उरचाणूरकळरिकल (family name) रामेण लिखितं द्रोणमूलं व्याख्यानं ग्रन्थं ।

— M3 concludes with :

द्रोणपर्व समाप्तं ।
कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वानुसृतस्वभावम् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥

१०१६ कोल्लवर्षे धनुर्मासं १४ तम दिने रामङ्कण्डत्तकुञ्जिकृष्णेन लिखितं द्रोणपर्व । शुभम् ॥

— M4 concludes with :

द्रोणपर्व समाप्तं ॥

अस्मिन्नक्षरहानिर्मात्राभ्रंशोऽथ वान्यथा लिखितम् ।
मोहाज्जातं ग्रन्थे ततः क्षान्ताः शोधयन्तु विद्वांसः ॥

— M5 concludes with :

द्रोणपर्व समाप्तम् ।
कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वानुसृतस्वभावम् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥

व्यासायाप्रतिमेतिहासरचनोल्लासाय दुर्वासिनां
त्रासायासकराय सत्सुकृतविश्वासाय दोषद्विषे ।
भासा यामुनरम्यतोयसदृशा या सायमासेविने
दासायाभयदायि मध्वगुरुहृद्वासाय तुभ्यं नमः ॥
व्यासाय भयनाशाय श्रीशाय गुणराशये ।
हृद्याय शुद्धविद्याय मध्वाय च नमो नमः ॥
कृष्णः पूतनिकारिरस्तशकटो वातान्तकः पादप-
च्छेत्ता वत्सबकाभिजिद्धृतगिरिर्गोपीष्टदोऽरिष्टहृत् ।
केशिघ्नो हतमल्लकंः स यवनक्ष्माजादिरात्तावलाः
साहस्रोऽर्जुनसारथिः कुरुबलं हत्वा ररक्ष क्षितिम् ॥
कौसल्यासुत ताटकामत मखत्रातर्मुनिस्त्रीहित-
च्छिन्नेष्वासनजानकीवृत वनावासिन्खराद्यन्तक ।
मारीचघ्न हनूमदिष्ट रविजार्तिच्छेद बद्धाम्बुधे
सेनाभ्रातृसमेत रावणरिपो सीतेष्ट रामाव माम् ॥

अनेन द्रोणपर्वलेखनेन श्रीमन्मध्वान्तर्गतश्रीपूर्णत्रयीशात्मक-श्रीगोपालकृष्णमूर्तिः प्रीयतां । श्रीगोपालकृष्णार्पणमस्तु । अयं ग्रन्थः मळ्ळेरि (family name) नामकस्य वर्तते ॥

# APPENDIX I

This Appendix comprises a series of additional passages found in different MSS. which were either too long to be included in the foregoing footnotes to the constituted text, or not sufficiently connected with the main thread of the narration, or were otherwise deemed not important enough for being included in the main critical apparatus.

The variants cited below these Appendix passages are of the same order as those cited below the additional ( star ) passages in the footnotes to the constituted text, so that, in both of them, corrupt readings, discrepant readings of single MSS. and minor variants are generally ignored, and obvious scribal errors silently corrected. Furthermore, the variants of the short prose formulaic references ( such as संजय उवाच ) have been uniformly ignored here.

## 1

After 7. 4. 1, $D_{4.7.8}$ ins. :

रहितं धिष्ण्यमालोक्य समुत्सार्य च रक्षिणः ।
पितेव पुत्रं गाङ्गेयः परिष्वज्यैकबाहुना ।
एह्येहि भो स्पर्धसे त्वं मया सार्धं हि सूतज ।
यदि मां नाधिगच्छेथा न ते श्रेयो भवेद्ध्रुवम् ।
कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता । [ 5 ]
सूर्यतस्त्वं महाबाहो विदितो नारदान्मम ।
कृष्णद्वैपायनाच्चैव केशवाच्च न संशयः ।
मानहा भव शत्रूणां मित्राणां शोकहा भव ।
कृष्णद्वैपायनश्चैव तेजसा च न संशयः ।
न च द्वेषोऽस्ति मे कर्ण त्वयि सत्यं ब्रवीमि ते । [ 10 ]
तेजोवधनिमित्तं तु परुषं चाहमब्रुवम् ।
अकस्मात्पाण्डवान्हि त्वं द्विषसीति मतिर्मम ।
तेनासि बहुशो रूक्षं श्रावितः कुरुसंसदि ।
हन्तासि समरे वीराञ्शत्रुपक्षक्षयंकर ।
ब्रह्मण्यता च शौर्यं च दाने वा परमो निधिः । [ 15 ]
कुलभेदभयाच्चाहं सदा परुषमब्रुवम् ।
इष्वस्त्रे वीर संधाने लाघवेऽस्त्रबलेऽपि च ।
सदृशः फल्गुनस्यापि कृष्णस्य च समो बले ।

## 2

$D_{4.7.8}$ ins. after 7. 4. 7 : $Dn_1$ after the second occurrence of it :

ब्रह्मण्यः सत्यवादी च तेजसार्को न संशयः ।
देवगर्भोऽजितः संख्ये मनुष्येभ्योऽधिको युधि ।
व्यपनीतोऽद्य मे मन्युर्यस्त्वां प्रति पुरा कृतः ।
दैवं पुरुषकारेण न शक्यमतिवर्तितुम् ।
सौदर्याः पाण्डवा वीर भ्रातरस्तेऽरिसूदन । [ 5 ]
गच्छैकत्वं महाबाहो मम चेदिच्छसि प्रियम् ।
मया भवतु निर्वृत्तं वैरमादित्यनन्दन ।
पृथिव्यां सर्वराजानो भवन्त्वद्य निरामयाः ।

कर्ण उवाच ।

जानाम्येतन्महाबाहो कौन्तेयोऽस्मि न सूतजः ।
परित्यक्तस्त्वहं कुन्त्या सूतेन च विवर्धितः । [ 10 ]
भुक्त्वा दुर्योधनैश्वर्यं न मिथ्या कर्तुमुत्सहे ।
वसु चैव शरीरं च पुत्रदारांस्तथा यशः ।
सर्वं दुर्योधनस्यार्थे त्यक्तं मे भूरिदक्षिण ।
नेष्यति व्याधिमरणं क्षत्रियस्येति कौरव ।
कोपिताः पाण्डवा नित्यं मयाश्रित्य सुयोधनम् । [ 15 ]
अपरावर्तिनो येऽर्थास्ते न शक्या निवर्तितुम् ।
दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् ।
पृथिवीक्षयं शंसन्ति निमित्तानीह भारत ।
भवद्भिर्हि पुरा दृष्टा कथितानि च संसदि ।
अजेयाः पुरुषैरन्यैरिति तांश्चोत्सहामहे । [ 20 ]
अनुजानीहि मां तात युद्धाय प्रीतिमानसम् ।
अनुज्ञातस्त्वया वीर युध्येयमिति मे मतिः ।
दुरुक्तानि च वाक्यानि संरम्भाच्चापलादपि ।
यन्मया ते कृतं किंचित्त्यज तद्भरतर्षभ ।

## 3

After 7. 9. 69, S ins. :

पितुर्यमाहुः पितरं वासुदेवं द्विजातयः ।

---

1

( L. 1 ) $D_7$ धिष्ण्यान्; $D_8$ धिष्ण्यम् ( for धिष्ण्यम् ). —( L. 3 ) $D_7$ स्पर्शसे ( for स्पर्धसे ). —( L. 4 ) $D_7$ नातः ( for न ते ). $D_8$ इति ( for ध्रुवम् ). — $D_8$ om. ( hapl. ) lines 8-9 ; $D_7$ reads the same twice. —( L. 11 ) $D_8$ पुरुषं ( for प° ). $D_7$ [illegible] ; $D_8$ तु ( for च ). $D_7$ अब्रवं. —( L. 12 ) $D_8$ तव ( for मम ). —( L. 13 ) $D_4$ lacuna for श्रावितः. —( L. 14 ) $D_8$ °क्षयंकरं ( for °कर ). —Line 16 is partly damaged in $D_4$. —( L. 18 ) MSS. फाल्गुनस्य.

2

( L. 3 ) $D_4$ यत् ( for यस् ). —( L. 4 ) $D_{4.7}$ अनिवर्तितुं ( for अति° ). —( L. 5 ) $Dn_1$ सोदर्याः ( for सौ° ). —( L. 6 ) $Dn_1$ एवैकत्वं ( for गच्छै° ). —( L. 9 ) $Dn_1$ संशयः ( for सूतजः ). —( L. 12 ) $Dn_1$ वसुनेव ( for वसु चैव ). $Dn_1$ तथो ( for तथा ). —( L. 13 ) $D_8$ [ऽ]त्ययं ( for त्यक्तं ). —( L. 17 ) $Dn_1$ $D_7$ उत्सहेत ( hypermetric ) ( for उत्सहेत् ). —( L. 18 ) $D_{4.7.8}$ पृथिवीक्षयशंसीनि ( for the prior half ). —( L. 19 ) $D_7$ om. हि. —( L. 20 ) $D_{7.8}$ अजेया ( for °याः ).

स एष नियतः कृष्ण आपदर्थं धनंजये ।
संनह्यते यदानर्थं धार्तराष्ट्रस्य संजय ।
स्थातारं नाधिगच्छामि प्रत्यमित्रं महौजसम् ।
संकर्षणगदौ चोभौ प्रद्युम्नोऽथ विडूरकः । [ 5 ]
आशावहश्च साम्बश्च वृष्णिवीराः प्रहारिणः ।
एते वै विहितास्तत्र पाण्डवार्थे जिगीषवः ।
केशवो यत्र तत्रैते यत्रैते तत्र केशवः ।
अर्जुनः केशवस्यात्मा कृष्णश्चात्मा किरीटिनः ।
अर्जुने तु जयो नित्यं कृष्णे कीर्तिश्च शाश्वती । [ 10 ]
प्राधान्यादपि भूयांसो अमेयाः केशवे गुणाः ।
मोहात्तु वशिनं कृष्णं न सर्वो वेत्ति माधवम् ।
मोहितो देवपाशेन मृत्युपाशपुरस्कृतः ।
न वेद कृष्णं दाशार्हमर्जुनं जयतां वरम् ।
आदिदेवौ महात्मानौ नरनारायणावुभौ । [ 15 ]
मनसापि हि दुर्धर्षौ सेनामेतां तरस्विनौ ।
नाशयेतामिहेच्छन्तौ मानुषत्वात्तु नेच्छतः ।
युगस्येव विपर्यासो भूतानामिव मोहनम् ।
इति मां प्रतिभात्येतद्भीष्मद्रोणनिपातनम् ।
लोकस्य स्थविरौ वीरौ मन्त्रज्ञौ मन्त्रधारिणौ । [ 20 ]
भीष्मद्रोणौ हतौ युद्धे मनुष्यान्मोहयिष्यतः ।
यां तां श्रियमसूयामि पुरा दृष्ट्वा युधिष्ठिरे ।
अद्य तामनुजानामि भीष्मद्रोणौ यदा हतौ ।
अथ वा मत्कृते प्राप्तः कुरूणामेष संक्षयः ।
पक्वानां हि वधे सूत वज्रायन्ते तृणान्यपि । [ 25 ]

4

After 7. 15. 18, S ins.:

नारद्गाजममर्षश्च विक्रमश्च समाविशत् ।
समुद्धृत्य निषङ्गाच्च धनुर्ज्यामवमृज्य च ।
महाशरधनुष्पाणिर्यन्तारमिदमब्रवीत् ।
सारथे याहि यत्रैष पाण्डरेण विराजता ।
ध्रियमाणेन छत्रेण राजा तिष्ठति धर्मराट् । [ 5 ]
तदेतद्दीर्यते सैन्यं धार्तराष्ट्रमनेकधा ।
एतत्संस्तम्भयिष्यामि प्रतिवार्य युधिष्ठिरम् ।
न हि मामभिवर्षन्तं संयुगे तात पाण्डवाः ।
मात्स्यपाञ्चालराजानः सर्वे च सहसोमकाः ।
अर्जुनो मत्प्रसादाद्धि महास्त्राणि समाप्तवान् । [ 10 ]
न मामुत्सहते तात न भीमो न च सात्यकिः ।
मत्प्रसादाद्धि बीभत्सुः परमेष्वासतां गतः ।
ममैवास्त्रं विजानाति धृष्टद्युम्नोऽपि पार्षतः ।

---

— ( L. 21 ) $Dn_1$ तांस् ( for मां ). $Dn_1$ -मानवान् ( for -मानवम् ). — ( L. 24 ) $D_4$ मम * ( for मया ते ).

3

Line 1 = ( var. ) 7. 10. $32^{ab}$. — ( L. 2 ) $G_1$ $M_{1.2.4.5}$ निहितः ( $M_{1.2}$ °तं ); $G_5$ नियतं; $M_3$ निहतः ( for नियतः ). — ( L. 3 ) = ( var. ) 7. 10. $33^{ab}$. — ( L. 4 ) T $G_{2-5}$ प्रत्यनीकाम( $G_{3.4}$ °के म-; $G_5$ °ते म )हौजसि ( for the post. half ). — ( L. 5 ) $G_{3-5}$ विडूरथः ( for °रकः ). — ( L. 6 ) $G_1$ $M_{1.2}$ आगावहेश्; $G_{3.4}$ अंशावहश्; $G_5$ अशाप्लवश्; $M_{3-5}$ आगावहश् ( for आशा° ). — ( L. 7 ) T $G_{2-4}$ सहितास् ( for विहि° ). $G_2$ प्रहारिणः; $G_{3-5}$ जिगीषवः ( for °षवः ). — Lines 9–15 = ( var. ) 7. 10. $38^{a}$–$41^{b}$. — ( L. 9 ) T $G_2$ कृष्णस्त्वात्मा ( for °श्चात्मा ). — ( L. 10 ) $G_5$ च ( for तु ). $G_1$ $M_{1.2}$ नित्यः; $M_4$ नित्य- ( for नित्यं ). — ( L. 11 ) $M_4$ ( *inf. lin.* as above ) एव ( for अपि ). — ( L. 12 ) $G_1$ M वेद ( for वेत्ति ). $G_4$ मानवः ( for माधवम् ). — ( L. 13 ) $M_4$ दैव- ( for देव- ). — ( L. 14 ) $G_1$ M अर्जुनं नेह पांडवं ( for the post. half ). — Lines 16–19 = ( var. ) 7. 10. 42–43. — ( L. 16 ) $G_{3.4}$ च ( for हि ). $G_5$ एनां ( for एतां ). $G_1$ M यशस्विनौ ( for तर° ). — ( L. 17 ) $G_1$ M च ( for तु ). — ( L. 18 ) $G_5$ विपर्यासौ ( for °र्यासो ). — ( L. 19 ) $G_1$ M मे ( for मां ). T $G_{2-5}$ -निपातनात् ( for °तनम् ). — Lines 20–25 = ( var. ) 7. 10. 45–47. — ( L. 21 ) $G_{3.4}$ मानुष्यान् ( for मनुष्यान् ). $M_1$ मोहयिष्यतं ( for °तः ). — ( L. 22 ) $M_3$ यं ( for यां ). $G_{1.5}$ $M_{1.2.4.5}$ घृताद्; $M_3$ धृतौ ( for दृष्ट्वा ). — ( L. 23 ) $M_{1.2}$ मान् ( for ताम् ). T $G_2$ यथा ( for यदा ). — ( L. 24 ) $M_{1.2}$ संक्षयं ( for °यः ). — ( L. 25 ) $G_5$ पार्थानां ( for पक्वानां ). $M_4$ om. हि.

4

( L. 1 ) $G_1$ M ह्यमर्षश्च ( for अम° ). — ( L. 3 ) T $G_2$ महाशरं ( for °शर- ). — ( L. 5 ) $T_2$ $M_{1.2.4}$ ध्रीय-माणेन ( for ध्रि° ). — ( L. 8 ) $T_1$ $G_3$ -वर्षंति; $T_2$ $G_2$ -वर्षीति ( for -वर्षन्तं ). $G_1$ M न हि मा धर्षयिष्यंति ( for the prior half ). — ( L. 9 ) $M_{3-5}$ मत्स्य- ( for मात्स्य- ).

नायं संरक्षितुं कालः प्राणांस्तात जयैषिणा ।
याहि स्वर्गं पुरस्कृत्य यशसे च जयाय च । [ 15 ]

संजय उवाच ।

एवं संचोदितो यन्ता द्रोणमभ्यवहत्ततः ।
तदाश्वहृदयेनाश्वानभिमन्त्र्याशु हर्षयन् ।
रथेन सवरूथेन भास्वरेण विराजता ।
तं करूशाश्च मत्स्याश्च चेदयश्च ससात्वताः ।
पाण्डवाश्च सपाञ्चालाः सहिताः पर्यवारयन् । [ 20 ]

5

After 7. 22. 63, N ( Ś$_2$ missing ) T G$_3$ ins. :

संजय उवाच ।

अतीव शुशुभे तस्य ध्वजः कृष्णाजिनोत्तरः ।
कमण्डलुर्महाराज जातरूपमयः शुभः ।
ध्वजं तु भीमसेनस्य वैडूर्यमणिलोचनम् ।
भ्राजमानं महासिंहं राजतं दृष्टवानहम् ।
ध्वजं तु कुरुराजस्य पाण्डवस्य महौजसः । [ 5 ]
दृष्टवानस्मि सौवर्णं सोमं ग्रहगणान्वितम् ।
मृदङ्गौ चात्र विपुलौ दिव्यौ नन्दोपनन्दकौ ।
यन्त्रेणाहन्यमानौ च सुस्वनौ हर्षवर्धनौ ।
शरभं पृष्ठसौवर्णं नकुलस्य महाध्वजम् ।
अपश्याम रथेऽस्युग्रं भीषयानमवस्थितम् । [ 10 ]
हंसस्तु राजतः श्रीमान्ध्वजो घण्टापताकवान् ।
सहदेवस्य दुर्धर्षो द्विषतां शोकवर्धनः ।
पञ्चानां द्रौपदेयानां प्रतिमारथभूषणम् ।
धर्ममारुतशक्राणामश्विनोश्च महात्मनोः ।
अभिमन्योः कुमारस्य शार्ङ्गपक्षी हिरण्मयः । [ 15 ]
रथे ध्वजवरो जैत्रस्तप्तचामीकरोज्ज्वलः ।

---

M$_3$ -राजानौ ( for °नः ). — G$_4$ om. lines 11–12. — ( L. 13 ) G$_2$ तमेवाख्यं स जानाति ( for the prior half ). M$_4$ हि ( for ऽपि ). — ( L. 14 ) M$_{3-5}$ जयैषिणां. — ( L. 15 ) G$_5$ सह- ( for याहि ). — After line 15, G$_2$ ins. an addl. colophon [ Adhy. No. 15 ]. — ( L. 17 ) G$_1$ M अभि- ( for आशु ). — ( L. 18 ) G$_5$ विराजिताः ( for °जता ). — ( L. 19 ) G$_{2-4}$ मात्स्याश्च ( for म° ). G$_{1, 5}$ M सस( G$_5$ M$_4$ °सा )त्यकाः ; G$_2$ ससोमकाः ( for ससात्वताः ). — ( ( L. 20 ) G$_5$ प्रत्यवारयन् ( for पर्य° ).

5

MSS. om. the reference. — ( L. I ) Ś$_1$ K ( except K$_3$ ) D$_{1, 4, 5, 7, 8}$ ह्यस्य ; D$_6$ G$_3$ यस्य ( for तस्य ). T G$_3$ ध्वजः कृष्णाजिनोत्तमः ( for the post. half ). — ( L. 2 ) Ś$_1$ corrupt. — D$_2$ om. lines 3–4. — ( L. 3 ) Dn$_3$ तद् ( for तु ). D$_{1, 5}$ वैडुर्य-. K$_4$ B T G$_3$ वैदू- ( K$_4$ G$_3$ °डू )र्यमणिरो( B$_{3-5}$ °लो )चनं ; Dn$_3$ D$_{3, 6}$ विद्युत्कमललो° ( for the post. half ). — ( L. 4 ) Dc$_1$ Dn$_1$ यथा ( for महा- ). K$_{4, 5}$ B$_4$ राजंतं. B$_1$ ( marg. ) Dn$_1$ पृ( Dn$_1$ दृ )ष्टवाहनं ( for दृष्टवानहम् ). — ( L. 5 ) Ś$_1$ कुरुराजेंद्र. K ( except K$_5$ ) D$_1$ T G$_3$ महात्मनः ( for महौजसः ). — ( L. 6 ) Ś$_1$ K ( except K$_5$ ) D$_{1, 4}$ om. ( hapl. ) from सोमं up to सौवर्णं ( in line 9 ). Dc$_1$ D$_6$ सोम- ( for सोमं ). B$_5$ -समन्वितं ( for -गणा° ). Dn$_1$ नकुलस्य महाध्वजं ( = post. half of line 9 ) ( for the post. half ). — ( L. 7 ) K$_5$ G$_3$ चित्र- ( for चात्र ). D$_{5, 7, 8}$ T G$_3$ विमलौ ( for विपुलौ ). Cv त्रिध्वग्लोहितचर्माणौ ( for the prior half ); post. half as above. — ( L. 8 ) Dc$_1$ Dn$_1$ D$_{3, 7, 8}$ T G$_3$ हन्यमानौ ; Cd [आ]हन्य° ( as above ). K$_5$ B$_{3-5}$ D$_{2, 5}$ सुस्वरौ ( B$_4$ °रं ); Dn$_2$ D$_6$ सस्वनौ. — ( L. 9 ) Dn$_2$ D$_{3, 7, 8}$ सरभं ; D$_6$ शरभी- ( for शरभं ). T G$_3$ मृष्ट- ( for पृष्ठ- ). D$_{2, 5}$ महाध्वजे ( for °ध्वजम् ). — ( L. 10 ) D$_6$ अपश्यत ; K$_{1-3}$ D$_{3, 4, 7, 8}$ T G$_3$ रणे ; D$_1$ रथं ( for रथे ). Ś$_1$ Dn$_3$ D$_{3, 5, 6}$ व्यग्रं ; K ( except K$_5$ ) D$_1$ T व्याघ्रं ; B$_1$ तूग्रं ; D$_4$ [ ऽ ]त्यर्थं ( for ऽत्युग्रं ). K$_{1-3}$ B$_{1, 2}$ D$_{1, 2, 6}$ भीषयाणम् ; D$_4$ भीष्मं यानम् ; D$_5$ भीषमानम् ; T भीमयानम् ( for भीषया° ). Ś$_1$ K$_{1, 2}$ D$_{1, 5, 7, 8}$ इव ( for अव- ). G$_3$ corrupt. — ( L. 11 ) B$_4$ Dc$_1$ D$_{1, 2, 7, 8}$ ध्वजे ; D$_4$ T G$_3$ ध्वज- ( for ध्वजो ). Ś$_1$ दृष्टः ; B$_3$ ( marg. as above ) दंड- ( for घण्टा- ). K$_{1-3}$ ध्वजो दृष्टः प्रतापवान् ( for the post. half ). — ( L. 12 ) B$_5$ महादेवस्य ( for सह° ). — ( L. 13 ) K$_5$ पांचालानां ( hypermetric ); D$_5$ पांचाल- ( for पञ्चानां ). K$_5$ B Dc$_1$ Dn$_1$ D$_6$ -ध्वज- ( for -रथ- ). Ś$_1$ D$_6$ G$_3$ -भूषणः ; K$_{1-3, 5}$ Dn$_2$ D$_{1-5, 7, 8}$ T -भूषणाः ( for °णम् ). — ( L. 14 ) D$_{2, 7, 8}$ महात्मनां ( D$_2$ °नः ); D$_4$ °रथाः ( for °त्मनोः ). — ( L. 15 ) Ś$_1$ K$_{1, 3}$ B$_{2, 4, 5}$ D$_8$ Cd शार्ङ्गः पक्षी. — Dc$_1$ reads lines 16–29 on marg. — ( L. 16 ) D$_7$ रथ- ( for रथे ). K$_5$ B$_4$ ध्वजरथो ( B$_4$ °रवो ) ( for °वरो ). B Dc$_1$ D$_2$ राजंस् ( for जैत्रस् ). Dn$_1$ रथध्वजवरे जैत्रे ( for the prior half ). K ( except K$_5$ ) D$_1$ -चामीकरप्रभः ( for °करोज्ज्वलः ). T G$_3$ रथोद्धतरजोलोलजै( G$_3$ °चै )त्रचामीकरोल्बणः. — Ś$_1$ K$_{1, 3, 4}$ B D$_1$ om. lines 17–28. — ( L. 17 ) T G$_3$ रथे ( for ध्वजे ).

घटोत्कचस्य राजेन्द्र ध्वजे गृध्रो व्यरोचत ।
अश्वाश्च कामगास्तस्य रावणस्य यथा पुरा ।
माहेन्द्रं च धनुर्दिव्यं धर्मराजे युधिष्ठिरे ।
वायव्यं भीमसेनस्य धनुर्दिव्यमभून्नृप । [ 20 ]
त्रैलोक्यरक्षणार्थाय ब्रह्मणा सृष्टमायुधम् ।
तद्दिव्यमजरं चैव फल्गुनार्थाय वै धनुः ।
वैष्णवं नकुलायाथ सहदेवाय चाश्विजम् ।
घटोत्कचाय पौलस्त्यं धनुर्दिव्यं भयानकम् ।
रौद्रमाग्नेयकौबेरं याम्यं गिरिशमेव च । [ 25 ]
पञ्चानां द्रौपदेयानां धनूरत्नानि भारत ।
रौद्रं धनुर्वरं श्रेष्ठं यं लेभे रोहिणीसुतः ।
तं तुष्टः प्रददौ रामः सौभद्राय महात्मने ।
एते चान्ये च बहवो ध्वजा हेमविभूषणाः ।
ददृशुस्तत्र शूराणां द्विषतां शोकवर्धनाः । [ 30 ]
तदभूद्ध्वजसंबाधमकापुरुषसेवितम् ।
द्रोणानीकं महाराज पटे चित्रमिवार्पितम् ।
शुश्रुवुर्नामगोत्राणि वीराणां संयुगे तदा ।
द्रोणमाद्रवतां राजन्स्वयंवर इवाहवे ।

Colophon.

6

After 7. 40. 5, K2 ( marg. ) ins.:

पुनः कर्ण[ र्णः ] प्रविव्याध शरैराशीविषोपमैः ।
विव्याध दशभिः शूरो अभिमन्युं महाबलम् ।
अप्राप्तानेव तान्सर्वांश्चिच्छेद लघुहस्तवत् ।
स्मयन्धनुश्छित्त्वा ( submetric ) राधेयस्य महाबलः ।
हयांश्च जघ्ने त्वरितो ध्वजं सारथिना सह । [ 5 ]
राधेयं विरथं कृत्वा सौभद्रो वाक्यमब्रवीत् ।
मया जितोऽसि राधेय विरथोऽसि महामते ।
अन्यं रथं समारुह्य युध्यस्व च महाबलः ।
भृत्योऽसि सूतपुत्रोऽसि बैडालव्रतिकः सदा ।
पाण्डवैः सह पैशुन्यं नित्य त्वं कृतवानसि । [ 10 ]

---

D1 G3 विरोचत ( for व्यरो° ). — ( L. 18 ) K5 D2 तु ( for च ). T1 G3 रोमशास् ( for कामगास् ). K2 वरुणस्य ( for रावणस्य ). K2. 5 D2. 5 transp. यथा and पुरा. — ( L. 19 ) K5 D4. 5 महेंद्र ; D3 माहेंद्रश्च. Dn2 D1. 7. 8 हि ; T G3 तु ( for च ). — ( L. 20 ) Dn2 D1. 7. 8 महात्मनः ; T G3 अभून्महत् ( for °न्नृप ). — ( L. 21 ) K5 [ उ ]त्सृष्टम् ( for सृष्टम् ). T G3 अद्भुतं ( for आयुधम् ). — ( L. 22 ) K5 दिव्यमंजगरं चैव ( sic ); T G3 यद्दिव्यमक्षयं चैव ( for the prior half ). MSS. फाल्गुनार्थाय. Dn2 D1. 7. 8 T G3 गांडीवं फा( T G3 फ )ल्गुनाय ( Dn2 T G3 °नस्य ) च ( for the post. half ). — ( L. 23 ) K5 D6 नकुलार्थाय ; T G3 °लस्याथ ( for °लायाथ ). K5 Dn2 D2. 5 चाश्विनं. T G3 सहदेवस्य चाश्विनं ( for the post. half ). — ( L. 24 ) T G3 घटोत्कचस्य. — ( L. 25 ) K2 Dn1 D2. 3. 5 -कौबेर्यं ( for -कौबेरं ). K5 रौद्रमाग्नेयकौरव्यं ( sic ); T G3 रौद्रं कौबेरमाग्नेयं ( for the prior half ). D6–8 T G3 याम्यांगिर( D8 °रि )शमेव च ( for the post. half ). — ( L. 26 ) K5 पांचाल- ( for पञ्चानां ). K2 Dn1 D5. 6 धनु- ( K2 D6 °नुः ) ( for धनू- ). D6 एतानि ( for -रत्नानि ). Dn2 D8 T G3 धनू( D3 G3 °नु )रत्नं बृ( T G3 म )हत्तरं ; D4 धनुर्दिव्यं महत्तरं ; D7 corrupt ( for the post. half ). — ( L. 27 ) K2 D4 G3 धनुर्धर- ( for °वरं ). Dn1 लेभे ( for श्रेष्ठं ). K2. 5 Dc1 D2. 3. 5 लेभे यं ( Dc1 D2. 5 यद् ) ( by transp. ); Dn1 श्रेष्ठं यद् ; T G3 यल्लेभे. — ( L. 28 ) K5 Dc1 Dn1 D2. 5 G3 सन्तुष्टः ; T संतुष्टः. — ( L. 29 ) K2 B Dc1 Dn1 D1. 6 -विभूषिताः ; K4 °षणं ( for °षणाः ). Ś1 रथा ध्वजविभूषणाः ( for the post. half ). T G3 एतांश्चान्यांश्च सुबहून्ध्वजांश्चापांश्च तोपितान्. — ( L. 30 ) B Dc1 D1. 6 तत्रा( B1 तदा- ; B3 यत्रा )दृश्यंत शूराणां ( for the prior half ). K1. 3. 4 T G3 शोकवर्धनः ( T G3 °नान् ). — ( L. 31 ) K4 D1 उदभूद् ; Dn1 तद्भुत- ( for तदभूद् ). Dn2 D3. 6 T G3 तदद्भुतमसंबाधम् ( T1 °बद्धं ; T2 G3 °बधं ) ( for the prior half ). D1 -सेवनं ( for -सेवितम् ). B Dc1 D7. 8 T G3 महापुरुषसेवितं ; Dn1 वीराणामभिमे° ( for the post. half ). — ( L. 32 ) D7 पाट- ; D3 पार- ( for पटे ). — ( L. 33 ) K5 Dn1 D5 अश्रु( Dn1 °श्रु )वन् ; T G3 श्रूयंते ( for शुश्रुवुर् ). T G3 सतां ( for शूराणां ( for वीराणां ). K5 D5 तथा ; T G3 सतां ( for तदा ). — ( L. 34 ) B1 आहरतां ; D4 आव्रजतां ( for आद्रवतां ). Dn2 D3. 6 स्वयंवरम्. D3 इह ( for इव ). T G3 आवभौ ( for आहवे ).

Colophon : — *Sub-parvan :* Omitting sub-parvan name, K1. 2 mention only द्वितीयदिवसे ; K3 D1 द्वितीययु( D1 °ये यु )द्धदिवसे. — *Adhy. name :* K5 Dn1 D2. 5 रथध्वजविभागवर्णनं ; Dn2 D8 सेनावर्णनं ( Dn2 °नः ); D3 सेनाबलवर्णनं ; D4 ध्वजवर्णनं ; T G3 अश्ववर्णनं. — *Adhy. no. :* K2. 3 Dn1 D2. 3 T G3 22 ( as in text ). — *Śloka no. :* Dn1 97.

सभां नीत्वा च पाञ्चाली विवस्त्रा कारिता त्वया ।
तत्तद्रूपान्यनेकानि वासांसि सुबहूनि च ।
दृष्टानि तत्र युष्माभिः कुरुभिश्च दुरात्मभिः ।
तत्फलं संप्रदक्ष्यामि यदि नोत्सहसे रणम् ।
युष्माभिश्च कृतोऽद्यैव चक्रव्यूहो दुरात्मभिः । [ 15 ]
कुलीना ये च राजानो धर्मिष्ठाः सत्यसंगराः ।
चक्राख्यं च न कुर्वन्ति व्यूहं पापिष्ठकारितम् ।
क्रौञ्चाः सुपर्णा हंसाह्वा मुशला गारुडास्तथा ।
एते व्यूहाश्च शूराणां धर्मिष्ठानां महात्मनाम् ।
यूयं दैत्यांशसंभूताः सर्वे तत्र न संशयः । [ 20 ]
इत्येवमुक्त्वा स तदा महात्मा
कर्णं सुभद्रातनयो महाबलः ।
स योद्धुकामः कुरुभिर्नृवीरो
महाबलः सत्यवतां वरिष्ठः ।

Colophon.

7

After 7. 48. $13^{ab}$, $K_2$ ( marg. ) ins. :

पौरुषं च समालम्ब्य किंचिन्मूर्छामवाप सः ।
एवं तदा महावीरः कुरुवंशविवर्धनः ।
युध्यमानस्तृषाक्रान्तः सुकुमारो महाबलः ।
क्षुधासंपीडितो राजन्नीषन्मूर्छामवाप सः ।
ईषद्भ्रममाने ते चक्षुषी समदृश्यत ( sic ) । [ 5 ]
क्षणोपविष्टोऽथ तदा वाक्यं चेदमुवाच ह ।
शृण्वन्तु कौरवाः सर्वे वाक्यं धर्मार्थसंहितम् ।
अर्जुनस्य न [ ? च ] दायादो भागिनेयो महात्मनः ।
कृष्णस्य चाहं दुर्मेधा यथा कापुरुषस्तदा ।
सुभद्रानन्दनो भूत्वा किं चापि न कृतं मया । [ 10 ]
सर्वे यूयं जीवमाना अश्वद्रोण[ह]परायणाः ।
एवं ब्रुवाणः स तदाभिमन्युः
प्रतापयुक्तोऽपि रणे प्रनष्टः ।
धृत्वा गृहीतः स तदा महात्मा
मूर्छान्वितो विह्वलतां जगाम । [ 15 ]
दिशो विलोकयन्सर्वाः कोपेन स महाबलः ।
तस्मिन्वै वीरशयने सौभद्रः प्रापतद्भुवि ।
हत्वा तान्सुबहून्वीरा॑ल्लक्ष्मणादीन्महाबलः ।
कोटिं हत्वा रथानां च गजानां च तथैव च ।
हयानामर्बुदं पूर्णं खर्वमेकं पदातिनाम् । [ 20 ]
एतान्युधि विसर्ज्यैवमभिमन्युर्दिवं गतः ।
तथास्तंगत आदित्ये द्वावेतौ युगपद्गतौ ।

8

After 7. 49, N ( except $Ś_1$ K ) S ins. :

संजय उवाच ।

एवं विलपमाने तु कुन्तीपुत्रे युधिष्ठिरे ।
कृष्णद्वैपायनस्तत्र आजगाम महानृषिः ।
तमर्चित्वा यथान्यायमुपविष्टं युधिष्ठिरः ।
अब्रवीच्छोकसंतप्तो भ्रातुः पुत्रवधेन सः ।
अधर्मयुक्तैर्बहुभिः परिवार्य महारथैः । [ 5 ]
युध्यमानो महेष्वासैः सौभद्रो निहतो रणे ।
बालश्चाबालबुद्धिश्च सौभद्रः परवीरहा ।
अनुपायेन संग्रामे युध्यमानो विनाशितः ।
मया प्रोक्तः स संग्रामे द्वारं संजनयस्व नः ।
प्रविष्टे च परांस्तस्मिन्सैन्धवेन स्म वारिताः । [ 10 ]

8

$B_5$ $G_3$ om the ref. —( L. 1 ) $B_{1.2.4.5}$ $Dn_2$ $D_{2-6}$ अथैनं ( $D_3$ °वं ) विलपंतं तं ( $Dn_2$ तु; $D_2$ च ); $B_3$ $Dc_1$ $D_1$ तथैवं विलपंतं तं ( $Dc_1$ तु ); $Dn_1$ $D_{7.8}$ एवं विलपिते वीरे ( for the prior half ). B $Dc_1$ $Dn_2$ $D_{1-6}$ कुंतीपुत्रं युधिष्ठिरं ( for the post. half ). — ( L. 2 ) S प्रादुर्भूतो ( for आजगाम ). $B_2$ महाद्युतिः ( for °नृषिः ). — After line 2, S ins. :

अथ दृष्ट्वा महात्मानं पाण्डुपुत्रो युधिष्ठिरः ।
मुक्तासनो दीनमनाः पूजां चक्रे महात्मनः ।

[ ( L. 1 ) $G_{3-5}$ माहात्मानं ( for महा° ). ]
— ( L. 3 ) $B_4$ $Dn_2$ $D_{1-3.5.6}$ अर्चयित्वा ; T $G_{2-5}$ तं समर्च्य ; $G_1$ $M_{1.2}$ तमर्च्य तु ( for °र्चित्वा ). S उपातिष्ठद् ( for उपविष्टं ). — ( L. 4 ) $Dn_1$ $D_{7.8}$ भ्रातृ- ( for भ्रातुः ). D ( except $Dc_1$ $D_1$ ) च ( for सः ). — Before line 5, T $G_{1-4}$ $M_6$ ins. युधिष्ठिरः. — ( L. 5 ) $D_4$ धर्मार्थ- ( for अधर्म- ). $Dn_1$ $D_8$ S -युद्धे ( for -युक्तैर् ). $D_4$ महारथः ( for °रथैः ). — ( L. 6 ) $Dn_2$ युद्धेषु नो ; $D_5$ °ध्वेनैर् ; $D_6$ युध्यमानैर् ; T °माने ( for °मानो ). $Dn_1$ $D_{7.8}$ महेष्वासः ( for °ष्वासैः ). $D_4$ युधि ( for रणे ). $D_3$ हतोभिमन्युः

ननु नाम समं युद्धमेष्टव्यं युद्धजीविभिः ।
इदं चैवासमं युद्धमीदृशं प्रकृतं परैः ।
तेनास्मि भृशसंतप्तः शोकबाष्पसमाकुलः ।
शमं नैवाधिगच्छामि चिन्तयानः पुनः पुनः ।
तं तथा विलपन्तं वै शोकबाष्पसमाकुलम् । [ 15 ]
उवाच भगवान्व्यासो युधिष्ठिरमिदं वचः ।
युधिष्ठिर महाप्राज्ञ सर्वशास्त्रविशारद ।
व्यसनेषु न मुह्यन्ति त्वादृशा भरतर्षभ ।
स्वर्गमेष गतः शूरः शत्रून्हत्वा बहून्रणे ।
अबालसदृशं कर्म कृत्वा वै पुरुषोत्तमः । [ 20 ]
अनतिक्रमणीयो वै विधिरेष युधिष्ठिर ।
देवदानवगन्धर्वान्मृत्युर्हरति भारत ।
युधिष्ठिर उवाच ।
इमे वै पृथिवीपालाः शेरते पृथिवीतले ।
निहताः पृतनामध्ये मृतसंज्ञा महाबलाः ।
नागायुतबलाश्चान्ये वायुवेगबलास्तथा । [ 25 ]

---

सुमहान्युध्यमानो विशेषतः. — ( L. 7 ) B Dn1 D8 G3, 5 बाल- ( for [अ]बाल- ). Dn1 D7, 8 S वीरश्च ( for सौभद्रः ). — ( L. 8 ) D3 अनुपायेन ( for °पायेन ). B1, 2 ( orig. ). 3-5 Dn2 D1-3 G3 विशेषतः ; B2 ( marg. ) Dc1 विशेषितः ; Dn1 D7, 8 निपातितः ( for विनाशितः ). — ( L. 9 ) B1, 3, 4 Dc1 D7, 8 युक्तः ; B2 Dn1 [अ]युक्तः ; B5 युक्तः ; D1 [इ]त्युक्तः ; D4 प्राप्ता ; G1 M चोक्तः ( for प्रोक्तः ). T G2-5 यद्यपि चोक्तः संग्रामे ( for the prior half ). D7, 8 च ( for नः ). — ( L. 10 ) D1 प्रविष्टं. B5 om. च. B3 D2 [S]भ्यंतरे ; Dc1 G3 च परान् ; D3 G5 च परैस् ; D5 चापरांस् ; G1 M1, 2 च वरांस् ( for च परांस् ). Dn1 D8 प्रावेशयत्पर( D8 °रा )स्तस्मिन् ; D7 प्रवेशनपरास्त° ( for the prior half ). Dc1 च वारिताः ; Dn1 D7, 8 निवा° ; Dn2 G5 [अ]सि वा° ; D1 स वा° ; D2 निवारितः ; D3-6 T G3 [आ]स वारिताः ( for स वा° ). — ( L. 11 ) B5 न तु ( for ननु ). D5, 7 युद्धे. S ( except G2 ) -जीविना ( G5 °नां ) ( for -जीविभिः ). — Dn1 D7, 8 read line 12 twice. — ( L. 12 ) Dn1 S ( except G1 ) विषमं ( for [ए]वासमं ). Dn1 D7, 8 ( all second time ) ईदृशं विषमं युद्धम् ; D7, 8 ( both first time ) इदं च विषमं युद्धे ( for the prior half ). B2 प्राकृतं ; B5 प्रहृतं ; Dc1 ( before corr. ) Dn2 D2-6 यत्कृतं ; D1 प्राकृतैः ; Dn1 D7, 3 ( all second time ) विहितं ; G1 ( *inf. lin.* ) विषमं ( for प्रकृतं ). Dn1 D7, 8 ( all first time ) नेष्टव्यं युद्धजीविभिः ; T G2-4 ईदृशं बहुभिः कृतं ; M3-5 ईदृशं प्रतिभाति मे ( M1, 5 [ *inf. lin.* ] मा ) ( for the post. half ). — ( L. 13 ) Dn1 D2 अस्मिन् ( for अस्मि ). D3 -वाक्य- ( for बाष्प- ). — ( L. 14 ) T G1, 3-5 M3-5 वै न ; M1, 2 तु न ( for नैव ). Dn1 D5 [अ]भि- ( for [अ]धि- ). Dn1 चितया च ; Dn2 D3-6 चिं( D5 चि )तयमानः ( D5 °नं ) ; D2 चितयामि ( for चिन्तयानः ). Dn2 om. the second पुनः. — Before line 15, B D G3, 4 ins. संजय उवाच. — D5 om. line 15. — ( L. 15 ) B2, 5 Dn2 D1 शोकवेग- ; Dc1 ( marg. ) शोकव्याधि- ; D3 °वाक्य- ( for °बाष्प- ). Dn2 -परिप्लुतं ( for -समाकुलम् ). D2, 4 शोकव्याकुलमानसं ; S शोकोपहतचेतसं ( G1 M °नं ) ( for the post. half ). — Before line 17, B2, 3 Dc1 Dn1 D1, 4 G1, 5 M ins. व्यासः. — ( L. 17 ) D7, 8 महाबाहुः ( for प्राज्ञ ). — ( L. 18 ) Dn1 D7, 8 S त्वद्विधाः ( S पुरुषाः ) पुरुषर्षभ ( Dn1 °भाः ) ( for the post. half ). — G5 om. lines 19-20. — ( L. 19 ) Dn1 D1, 5 एव ; D7, 8 एवं ( for एष ). Dn1 D7, 8 शत्रुं ( for शत्रून् ). Dn1 D7, 8 महारणे ; T G1, 3, 4 M1-4 रणे बहून् ( by transp. ) ; M5 रणे रिपून्. — ( L. 20 ) Dn2 D2, 4-6 अकाल- ; D3 अलान- ( for अबाल- ). M2 -सदृशः ( for °शं ). D1 [ए]व ; D3 च ( for वै ). D4, 6, 8 पुरुषोत्तम ; S ( G5 om. ) पुरुषर्षभः ( G1 M1-3 °भ ). — ( L. 21 ) T G M1, 2 हि ( for वै ). Dn1 नित्यमेव ; D7, 8 विधिर्नित्यं ( for विधिरेष ). T G2-5 सनातनः ( for युधिष्ठिर ). — ( L. 22 ) Dn1 D7 -गंधर्व- ; D3 T G2-5 -गंधर्वा ( for °र्वान् ). D5 अर्हति ( for हरति ). D1 भारतः. Dn1 D7, 8 मनुष्योरगराक्षसाः ; T G2-5 मृत्युं गच्छन्ति भारत ( for the post. half ). — After line 22, Dn1 D7, 8 ins.:

मृत्योः केचिन्न मुच्यन्ते भूतग्रामे चतुर्विधे ।

— With the मृत्यूत्पत्तिकथन and the story of अकम्पन, cf. 12. 248ff. Lines 23-25 = ( var. ) 12. 248. 1[a]-2[b]. — ( L. 23 ) B1 **ते ; Dn1 D7, 8 S य इमे ( for इमे वै ). Dn1 शेरतः ( for शेरते ). Dn1 M4 पृथिवीदने ( for °तले ). — ( L. 24 ) Dn2 om. ( hapl. ) from पृतना up to निहता ( in the extra line after line 25 ). G1 पृथिवी- ( for पृतना- ). T G3, 4 मृत्यु- ( for मृत- ). — After line 24, Dn1 D7, 8 S ins.:

एकैकशो भीमबला नागायुतशतोपमाः ।

[ G5 महीपाला ( for भीमबला ). Dn1 D7, 8 -समा बले ; G1 M -बलोपमाः ( for -शतो° ). ]

— Dn1 om. line 25. — ( L. 25 ) D7, 8 उग्रवेग- ; S ओघवेग ( for नागायुत- ). — After line 25, B D ins.:

त एते निहताः संख्ये तुल्यरूपा नरैर्नराः ।

नैषां पश्यामि हन्तारं प्राणिनां संयुगे क्वचित् ।

विक्रमेणोपपन्ना हि तेजोबलसमन्विताः ।

अथ चेमे हताः प्राज्ञाः शेरते विगतायुषः ।

मृता इति च शब्दोऽयं वर्तते च गतार्थवत् ।

इमे मृता महीपालाः प्रायशो भीमविक्रमाः । [ 30 ]

राजपुत्राश्च संरब्धा वैश्वानरमुखं गताः ।

अत्र मे संशयः प्राप्तः कुतः संज्ञा मृता इति ।

कस्य मृत्युः कुतो मृत्युः केन मृत्युरिमाः प्रजाः ।

हरत्यमरसंकाश तन्मे ब्रूहि पितामह ।

संजय उवाच ।

तं तथा परिपृच्छन्तं कुन्तीपुत्रं युधिष्ठिरम् । [ 35 ]

आश्वासनमिदं वाक्यमुवाच भगवानृषिः ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

अकम्पनस्य कथितं नारदेन पुरा नृप ।

स चापि राजा राजेन्द्र पुत्रव्यसनमुत्तमम् ।

अप्रसह्यतमं लोके प्राप्तवानिति मे मतिः । [ 40 ]

तदहं संप्रवक्ष्यामि मृत्योः प्रभवमुत्तमम् ।

ततस्त्वं मोक्ष्यसे दुःखात्स्नेहबंधनसंश्रयात् ।

पुरा वृत्तमिदं तात शृणु कीर्तयतो मम ।

---

[ Dn1 D7.8 य एते ; D3 पतंते ; D6 एनत्ते ( for त एते ). B2 तुल्यरूपैर् ; D2.8 °रूप- ( for °रूपा ). B3 नरेश्वर ; Dn1 D7.8 नरा ( D7 नरो ) नरैः ( by transp. ) ; D4 नरर्षभ ; D5 [अ]मरैर्नराः. ]

— Lines 26–30 = ( var. ) 12. 248. 3ᵃ–5ᵇ. — ( L. 26 ) D7.8 संग्रामे ; G1 M1.2.4.5 हर्तारं ( for हन्तारं ). D7.8 प्राणिनः ; G1 M प्राणानां ( for प्राणिनां ). — ( L. 27 ) Dn1 क्रमेणैव ( for विक्रमेण ). B5 D2 [ उ ]पसंपन्नास् ; D3 [ उ ]पपन्ना वै ( for °पन्ना हि ). B5 Dn2 D3–8 तपोबल- ; D2 दृप्ता बल- ( for तेजोबल- ). — After line 27, B D ins. :

जेतव्यमिति चान्योन्यं येषां नित्यं हृदि स्थितम् ।

[ Dc1 Dn1 D1.7 नित्यं येषां ( by transp. ). D8 ये* *- हृदि संस्थितं ( for the post. half ). ]

— ( L. 28 ) Dn1 D4 वेमे ; Dn2 वै नि-. Dn1 D7.8 T G M1.2 महा- ( for हताः ). D7.8 G1 M1.2 -प्राज्ञ. M3–5 कथमेते महाप्राज्ञाः ( for the prior half ). Dn1 हि मृता युधि ; D4.6 विगतायुधाः ; D7 हि म[मि]तायुधाः ; D8 हि गतायुधाः ; S च गतायुषः ( for विगता° ). — ( L. 29 ) D4 च इति ( by transp. ). B4 नु ; D7.8 हि ( for च ). Dc1 D4.6 यथार्थवत् ; Dn1 D7.8 G1.5 M1–3.5 ( *sup. lin.* ) गताध्वसु ; Dn2 D2.5 ततोर्थवत् ; T G3.4 M4.5 गतायुषां ( M4 °षु ) ; G2 corrupt ( for गतार्थवत् ). — After line 30, B D ins. :

निश्चेष्टा निरभीमानाः शूराः शत्रुवशं गताः ।

[ Dn2 न विष्टा ( for निश्चेष्टा ). Dn1 D7.8 निरहंकाराः ; D5 निरभिमानाः ( for निरभी° ). ]

— Dc1 om. ( hapl. ) line 31 ; B3 reads the same on marg. — ( L. 31 ) Dn1 D7.8 S -समप्रभाः ; D4 -मुखे गताः. — Lines 32–34 = ( var. ) 12. 248. 5ᶜ–6ᵈ. — ( L. 32 ) Dc1 D8 अतो ; T G1.3.4 M1.2 तत्र ( for अत्र ). Dn1 D7.8 संग्रामे संक्षयं प्राप्ताः ; M3–5 अत्र संशयतां प्राप्तः ( for the prior half ). — ( L. 33 ) D2 G2 कश्च ( for कस्य ). G5 om. केन मृत्युः. Dn1 D7.8 इह ( for इमाः ). B Dc1 Dn2 D1–6 कथं संहरते प्रजाः ( for the post. half ). — ( L. 34 ) Dc1 Dn2 D2.3.5.6 -संकाशं ( Dn2 °शां ) ; T G °शास् ; M1.2 °शस ( for -संकाश ). Dn1 D7.8 आहरत्यमरप्रख्य ( for the prior half ). Dn1 D7.8 एतद् ( for तन्मे ). Dn1 D7.8 om. the ref. — ( L. 36 ) Dn1 G1 M आश्वासयन् ; D5 °सितम् ( for °सनम् ). — Before line 37, B Dc1 Dn2 D1–6 G1 M ins. व्यास उवाच ; Dn1 D7.8 कृष्णद्वैपायन उवाच. — ( L. 38 ) G5 महात्मना ( for पुरा नृप ). — ( L. 39 ) D7 राज- ( for राजा ). G5 -वात्सल्यम् ( for -व्यसनम् ). — D5 om. ( hapl. ) lines 40–41. — ( L. 40 ) M3.5 ( *sup. lin.* ) अप्रहस्यतमं ( for अप्रसह्य° ). Dn1 D7.8 S मे ( S नः ) श्रुतं ( for मे मतिः ). — ( L. 41 ) Dn1 D7.8 S त( G5 य )त्तेहं ( for तदहं ). — ( L. 42 ) Dc1 अतस् ( for ततस् ). Dn2 D5 सं- ( for त्वं ). Dn1 D7.8 मुच्यसे ; D2–4.6 मोक्षसे. T G2–4 देह- ( for स्नेह- ). Dn1 D7.8 स्नेहबंधान्न संशयः ( for the post. half ). — ( L. 43 ) D3 कृतम् ( for वृत्तम् ). D2 समस्तपापराशिघ्नं ( for the prior half ). S transp. शृणु and मम. — ( L. 44 ) D4 S धर्म्यम् ( for धन्यम् ). Dn1 D7.8 धन्यमाश्वासनायुक्तं ( for the prior half ). D4 युधि ( for युधि- ). — After line 44, B D ins. :

पवित्रमरिसंघघ्नं मङ्गलानां च मङ्गलम् ।

यथैव वेदाध्ययनमुपाख्यानमिदं तथा ।

श्रवणीयं महाराज प्रातर्नित्यं नृपोत्तमैः ।

पुत्रानायुष्मतो राज्यमीहमानैः श्रियं तथा ।

[ ( L. 1 ) D7.8 पुत्रीयम् ( for पवित्रम् ). — D4 om. ( hapl. ) lines 3–4. — ( L. 3 ) B3.5 श्रावणीयं ( for श्रव° ). D1 द्विजोत्तमैः ( for नृपो° ). — ( L. 4 ) D1.8

धन्यमाख्यानमायुष्यं शोकघ्नं पुष्टिवर्धनम् ।
पुरा कृतयुगे तात आसीद्राजा ह्यकम्पनः । [ 45 ]
स शत्रुवशमापन्नो मध्ये संग्राममूर्धनि ।
तस्य पुत्रो हरिर्नाम नारायणसमद्युतिः ।
श्रीमान्कृतास्त्रो मेधावी युधि शक्रसमो बली ।
स शत्रुभिः परिवृतो बहुधा रणमूर्धनि ।
व्यस्यन्बाणसहस्राणि योधेषु च गजेषु च । [ 50 ]
स कर्म दुष्करं कृत्वा संग्रामे शत्रुतापनः ।
शत्रुभिर्निहतः संख्ये पृतनायां युधिष्ठिर ।
स राजा प्रेतकृत्यानि तस्य कृत्वा शुचान्वितः ।
शोचन्नहनि रात्रौ च नालभत्सुखमात्मनः ।
तस्य शोकं विदित्वा तु पुत्रव्यसनसंभवम् । [ 55 ]
अथाजगाम देवर्षिर्नारदोऽस्य समीपतः ।
स तु राजा महाभागो दृष्ट्वा देवर्षिसत्तमम् ।
पूजयित्वा यथान्यायं कथामकथयत्तदा ।
तस्य सर्वं समाचष्ट यथा वृत्तं नरेश्वर ।
शत्रुभिर्विजयं संख्ये पुत्रस्य च वधं तथा । [ 60 ]
मम पुत्रो महावीर्य इन्द्रविष्णुसमद्युतिः ।

---

नायुष्मतो ( for आयु° ). Dn1 D7.8 राजन् ( for राज्यम् ). D5 प्रियं ( for श्रियं ). B1 तदा ( for तथा ). ]

— Lines 45–47 = ( var. ) 12. 248. $7^a$–$8^b$. — ( L. 45 ) Dn2 कृते युगे; D4 युगकृते ( for कृतयुगे ). Dn1 D7.8 विकंपनः ( for ह्यकं° ). S ( G5 [ by corr. ] ) राजा ह्यासीदकंपनः ( for the post. half ). — G1 M1.2 om. line 46. — ( L. 46 ) D1.3 -वधम् ( for -वशम् ). D7 आप्नोति ( for आपन्नो ). — After line 46, T G3 read for the first time line 1 of the extra passage ins. after line 49. — D4 om. ( hapl. ) line 47–49. — ( L. 47 ) B D ( D4 om. ) -समो बले ( for -समद्युतिः ). — ( L. 48 ) G1 M ह्रीमान् ( for श्री° ). B Dc1 Dn2 D1–3.5.6 शक्रोपमो ( for शक्रसमो ). Dn1 D2.7.8 बले ( D2 °ले ) ( for बली ). — After line 49, S ins.:

योधयामास तान्सर्वान्सर्वास्त्रकुशलो बली ।
वर्षन्बाणसहस्राणि शत्रुष्वमितविक्रमः ।
पदातिरथनागाश्वान्प्रममाथ महाबलः ।
तदुदीर्णं बलं सर्वं हत्वारीनरिसूदनः ।
त्रिविष्टपं यथा शक्रः प्रविवेश पुरोत्तमम् । [ 5 ]
स दृष्ट्वा पितरं युद्धे तदवस्थं महाद्युतिः ।
अचिन्तयित्वा मरणं शत्रुमध्येऽविशत्तदा ।
स शरैराचितश्चित्रैर्गदाभिर्मुसलैरपि ।
मृद्नन्पत्तसहस्राणि रथांश्च हयवारणान् ।
परानीकं विभिद्याजौ मोक्षयित्वा च तं नृपम् । [ 10 ]
पुनरेवाकरोद्युद्धं शत्रुमध्ये गतो बली ।
ततस्ते रथिनः सर्वे समेत्य पुनराहवे ।
जघ्नुस्तं परिवार्यैकं तोमरैरिव कुञ्जरम् ।

[ ( L. 1 ) T G3 ( all first time ) बलवान् ( for तान्सर्वान् ). T G2.3 ( all [ except G3 ] first time ) वद्धश्चासीदकंपनः ( for the post. half ). — T repeat and G2 M3–5 read lines 2–5 after the extra passage following line 52 ins. by S. — ( L. 2 ) T ( both second time ) G2 M3–5 वर्षं शरवर्षाणि ( for the prior half ). G2 -विक्रमं. — ( L. 4 ) T ( both second time ) G1.5 M अरेर् ( for अरीन् ). G2 अरिसूदनं; G3 रिपुसूदनः; M1.2 [अ]रिनिसूदनः. — ( L. 6 ) G2 महाद्युतिं ( for °द्युतिः ). — ( L. 7 ) T G3.4 सुतः ( for तदा ). G2 शत्रुमध्यगतो बली; G5 °मध्यं ततोविशत् ( for the post. half ). — G2 om. ( hapl. ) lines 8–11. — ( L. 8 ) G4 शल्यैर्; G5 चक्रैर् ( for चित्रैर् ). G1 M स शरैरायसैश्चक्रैर् ( for the prior half ). — ( L. 9 ) G1 M1.2 नरांश्च ( for रथांश्च ). G5 पदातीन्वाजिवारणान् ( for the post. half ). — ( L. 10 ) G3.4 मोक्षयामास ( for °यित्वा च ). — ( L. 11 ) G1.5 M -मध्य-; G2 -मध्यं ( for -मध्ये ). ]

— ( L. 50 ) Dn2 D3 व्यस्यद्; D7.8 वदन्. D4 वा ( for the second च ). — ( L. 51 ) D1 मृशदारुणे; G5 शत्रुकर्शनः ( for °तापनः ). — ( L. 52 ) S ( except G2 ) शेते ( for संख्ये ). — After line 52, S ins.:

द्विषद्भिर्निहतं दृष्ट्वा प्रियं पुत्रमकम्पनः ।
अमर्षजनितक्रोध आहवं सहसा गतः ।

[ ( L. 2 ) M3–5 अमर्षा ( for अमर्ष- ). G2.4.5 आहवात् ( for आहवं ). ]

— ( L. 53 ) M3–5 राजन् ( for कृत्वा ). Dn1 D7.8 विशांपते ( for शुचान्वितः ). — ( L. 54 ) Dn1 D7 S न लेभे; D3 न लभेत् ( for नालभत् ). G1 M1.2 शांतिम् ( for सुखम् ). — ( L. 55 ) D1 [अ]थ ( for तु ). Dn1 D7.8 पुत्रव्यसनतो भवं ( for the post. half ). — ( L. 56 ) D2.5 आजगामाथ ( by transp. ). G5 नारदः सुमहातपाः ( for the post. half ). — ( L. 57 ) G5 महाबाहो ( for °भागो ). Dn1 लब्धा ( for दृष्ट्वा ). D1 S दृष्ट्वा देवर्षिमागतं ( for the post. half ). — ( L. 58 ) Dn1 D7.8 कथयामास तत्तथा ( for the post. half ). — ( L. 59 ) Dn1 D7.8 S पुत्रस्य ( T G2–4 तदस्मै; G1.5 M स तस्मै ) सर्वमाचष्ट ( for the prior half ). B ( except B1 ) Dc1 Dn2 D1.2.5.6 नरेश्वरः;

शत्रुभिर्बहुभिः संख्ये पराक्रम्य हतो बली ।
क एष मृत्युर्भगवन्किंवीर्यबलपौरुषः ।
एतदिच्छामि तत्त्वेन श्रोतुं मतिमतां वर ।
तस्य तद्वचनं श्रुत्वा नारदो वरदः प्रभुः । [ 65 ]
आख्यानमिदमाचष्ट पुत्रशोकापहं महत् ।
नारद उवाच ।
शृणु राजन्महाबाहो आख्यानं बहुविस्तरम् ।
यथा वृत्तं श्रुतं चैव मयापि वसुधाधिप ।
प्रजाः सृष्ट्वा तदा ब्रह्मा आदिसर्गे पितामहः ।
असंहृतं महातेजा दृष्ट्वा जगदिदं प्रभुः । [ 70 ]
तस्य चिन्ता समुत्पन्ना संहारं प्रति पार्थिव ।
चिन्तयन्न ह्यसौ वेद संहारं वसुधाधिप ।
तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत ।
तेन सर्वा दिशो व्याप्ताः सान्तर्देशा दिधक्षता ।
ततो दिवं भुवं खं च ज्वालामालासमावृतम् । [ 75 ]
चराचरं जगत्सर्वं ददाह भगवान्प्रभुः ।
ततो हतानि भूतानि चराणि स्थावराणि च ।
महता क्रोधवेगेन त्रासयन्निव वीर्यवान् ।
ततो हरो जटी स्थाणुर्निशाचरपतिः शिवः ।
जगाम शरणं देवं ब्रह्माणं परमेष्ठिनम् । [ 80 ]

---

$Dn_1$ $D_{7.8}$ जनेश्वर ; S ( $G_5$ damaged ) युधिष्ठिर ( for नरेश्वर ). — $D_1$ om. line 60. — ( L. 60 ) $Dn_1$ विजये ; $D_5$ विजितं ; T $G_{2-5}$ निर्जितं ; $G_1$ $M_{1.2}$ निहतः ; $M_{3-5}$ निर्जयं ( for त्रिजयं ). $G_{1.5}$ $M_{1-3.5}$ संखे ; $G_3$ संघे ( for संख्ये ). $D_4$ वचनं ( for च वधं ). T $G_{2-5}$ तदा ( for तथा ). $D_{7.8}$ शत्रुगायां युधिष्ठिर ( for the post. half ). — Before line 61, S ins. अकंपनः. — ( L. 61 ) T $G_2$ इंद्राविष्णु- ( for इन्द्र° ). $B_{3.4}$ $Dn_1$ $D_{7.8}$ -समो ( for -सम- ). $B_4$ $D_{7.8}$ युधि ; $Dn_1$ बली ( for -द्युतिः ). — ( L. 62 ) $Dn_1$ $D_{7.8}$ निहतः ( for बहुभिः ). $G_1$ M संखे ; $G_4$ संघे ( for संख्ये ). $D_{7.8}$ हरिर् ( for हतो ). S ( except $G_2$ ) युधि ( for बली ). — After line 62, S ins. :

शृणोमि प्राणिनां चापि मृत्युः प्रभवते किल ।
[ $G_{4.5}$ शृणु मे ( for शृणोमि ). ]

— ( L. 63 ) $D_{4.7}$ भगवान् ; $D_5$ बलवान् ( for भगवन् ). S क एष बल( $G_1$ M भग )वान्मृत्युः ( for the prior half ). $D_{7.8}$ स्ववीर्य- ( for किं° ). $D_{7.8}$ $M_2$ -पौरुषं ( for -पौरुषः ). — ( L. 64 ) $Dn_1$ $D_{7.8}$ कथितं तपतां वर ( $D_8$ °रः ); S कथितुं ( $G_{1.5}$ $M_{1.2}$ °तं ) द्विजसत्तम ( for the post. half ). — Lines 65–69 = ( var. ) 12. 248. $11^a$–$13^b$. — Before line 65, T $G_{2-5}$ $M_{3-5}$ ins. व्यासः. — ( L. 65 ) $D_4$ [ s ]प्यवदत् ( for वरदः ). $Dn_1$ $D_{7.8}$ नारदोथ तपोधनः ; S °दो भगवानृषिः ( for the post. half ). — ( L. 66 ) $Dn_1$ $D_{7.8}$ ततः ( for महत् ). — S om. the ref. — ( L. 67 ) $Dn_1$ $D_{7.8}$ त्वं शृणुष्व महेष्वास ; T $G_{1.2.4.5}$ M राजञ्शृणु ममेदं त्वम् ; $G_3$ एतदिच्छामि मेदं त्वम् ( for the prior half ). $G_5$ भुवि ( for बहु- ). — ( L. 68 ) $G_5$ चापि ( for चैव ). — ( L. 69 ) $Dn_1$ $D_{7.8}$ $G_{1.5}$ M महाप्राज्ञ ( $Dn_1$ $G_5$ °ज्ञः ); $D_5$ तथा ब्रह्मा ; T $G_{2-4}$ महाराज ( for तदा ब्रह्मा ). $Dn_1$ $D_{7.8}$ T $G_{2-4}$ M प्रजासर्गे ; $G_1$ प्रजाः सर्वे ; $G_5$ सर्वलोक- ( for आदिसर्गे ). — ( L. 70 ) $M_{1.2}$ असंसृतं ( for असंहृतं ). $D_4$ महत् ( for प्रभुः ). Lines 71–84 = ( var. ) 12. 248. 15–21. — ( L. 71 ) $Dn_2$ $D_{3-6}$ समापन्ना ( for समुत्पन्ना ). — ( L. 72 ) $Dn_1$ $D_{7.8}$ स च नो ( for न ह्यसौ ). S चिंतयन्नास-सादैव ( $M_{3-5}$ °दैवं ) ( for the prior half ). $G_1$ $M_{3-5}$ संहारं प्रति पार्थिव ( for the post. half ). — ( L. 73 ) $Dn_2$ $D_5$ मुखे ( for खेभ्यो ). $B_1$ उपपद्यत ( for उदतिष्ठत ). $Dn_1$ $D_{7.8}$ चक्षुर्भ्यो( $Dn_1$ °पो )ग्निरभूत्तदा ; $D_4$ मुखादग्निरतिष्ठत ; T $G_{2-5}$ मुखेभ्योग्निरजायत ; $G_1$ M खेभ्योग्निः समजायत ( for the post. half ). — $D_8$ om. line 74. — ( L. 74 ) $D_4$ सप्तदेशा ; $D_5$ सर्वे देशा ; $D_6$ सांतर्देशान् ; T $G_{1.3.4}$ M सर्वान्देशान् ; $G_{2.5}$ सर्वदेशं ( for सान्तर्देशा ). $D_6$ $G_1$ $M_{1.2}$ दिधक्षतः ( for °ता ). — ( L. 75 ) $D_1$ दिशं ; $D_3$ मुखं ( for भुवं ). $B_{1.3.5}$ $Dc_1$ ( before corr. as above ; by corr. ) $D_2$ चैव ( for खं च ). T $G_{2-4}$ ततो भुवं दिवं ( T दिशं ) चैव ( for the prior half ). T $G_1$ M सर्व- ; $G_{3-5}$ सर्वं ( for ज्वाला- ). $B_2$ $Dc_1$ $D_{2.4}$ -समाकुलं ; $Dn_1$ $D_{7.8}$ -समावृणोत् ( for °वृतम् ). T $G_{1.3.5}$ M सर्वं ज्वालाभिः संवृतं ; $G_2$ ज्वालामालाभिसंवृतं ( for the post. half ). — ( L. 76 ) S ब्रह्मणः परवीरहन् ( for the post. half ). — $G_4$ om. ( hapl. ) lines 77–80. — ( L. 77 ) $Dn_1$ $D_{7.8}$ ददाह ; $D_2$ हि तानि ( for हतानि ). S ( $G_4$ om. ) कोपो दहति भूतानि ( for the prior half ). $D_1$ त्रस्थानि ( sic ) ( for चराणि ). $Dn_1$ $D_{7.8}$ S ( $G_4$ om. ) जंगमानि ध्रुवाणि च ( for the post. half ). — ( L. 78 ) T $G_{2.3.5}$ कोप- ( for क्रोध- ). — After line 78, $B_5$ ins. :

वासुदेव दयाशील लीलया मां समुद्धर ।
धरोद्धारे समर्थोऽसि ममोद्धारे कियाञ्श्रमः ।

— ( L. 79 ) $Dn_1$ $D_7$ हरिर् ; Bom. ed. रुद्रो ( for हरो ). $G_5$ ( *inf. lin.* ) शिव- ( for जटी ). $Dn_2$ lacuna; Bom. ed. हरः ( for शिवः ). — ( L. 80 ) $Dn_2$ दिव्यं ( for देवं ). $Dn_1$ $D_{7.8}$ $G_1$ $M_{1.2}$ परवीरहा ; T $G_{2.3.5}$

तस्मिन्नापतिते स्थाणौ प्रजानां हितकाम्यया ।
अब्रवीत्परमो देवो ज्वलन्निव महामुनिः ।
किं कुर्म कामं कामार्ह कामाज्जातोऽसि पुत्रक ।
करिष्यामि प्रियं सर्वं ब्रूहि स्थाणो यदिच्छसि ।

Colophon.

स्थाणुरुवाच ।

प्रजासर्गनिमित्तं हि कृतो यत्नस्त्वया विभो । [ 85 ]
त्वया सृष्टाश्च वृद्धाश्च भूतग्रामाः पृथग्विधाः ।
तास्त्वेह पुनः क्रोधात्प्रजा दह्यन्ति सर्वशः ।
ता दृष्ट्वा मम कारुण्यं प्रसीद भगवन्प्रभो ।

ब्रह्मोवाच ।

न क्रुध्ये न च मे काम एतदेवं भवेदिति ।
पृथिव्या हितकामात्तु ततो मां मन्युराविशत् । [ 90 ]
इयं हि मां सदा देवी भारार्ता समचूचुदत् ।
संहारार्थं महादेव भारेणाभिहता सती ।
ततोऽहं नाधिगच्छामि तथ्ये बहुविधं तदा ।
संहारमप्रमेयस्य ततो मां मन्युराविशत् ।

स्थाणुरुवाच ।

संहारार्थं प्रसीदस्व मा रुषो विबुधाधिप । [ 95 ]
मा प्रजाः स्थावराश्चैव जङ्गमाश्च व्यनीनशन् ।

---

$M_{3-5}$ °हन् ( for परमेष्ठिनम् ). — ( L. 81 ) $B_1$ $D_5$ S ( except $G_2$ ) निपतिते ; $B_5$ चाप° ( for आप° ). — ( L. 82 ) T $G_{2-4}$ महाद्युनिः ( for °मुनिः ). — Before line 83, S ( except $G_2$ ) ins. ब्रह्मा. — ( L. 83 ) $B_3$ कर्न ; $D_2$ कर्तु ; $D_5$ कुर्वे ; $D_6$ कुर्मः ( for कुर्म ). $D_4$ काम्याहं. $D_{n1}$ $D_{7.8}$ करोमि कमहं कामं ; S कं ( $G_{3-5}$ किं ) कुर्मि ( $G_5$ कर्म ) कामं कामारे ( for the prior half ). $D_{n1}$ $D_{7.8}$ S कामार्होसि मतो मम ( for the post. half ). — ( L. 84 ) $D_{n1}$ $D_{7.8}$ करिष्ये ते ( for °ष्यामि ). $D_{3.6}$ च तत् ( for प्रियं ). S करिष्ये ते प्रियं कामं ( for the prior half ). $D_{n1}$ $D_{7.8}$ यमिच्छसि ; $G_1$ $M_{1.2.4}$ यदी° ( for यदि° ). Colophon. — *Sub-parvan* : $B_{1.2.4}$ अभिमन्युवध. — *Adhy. name* : $B_{1.3}$ मृत्युप्रजापतिसंवादे मृत्यूपाख्यानं ; $B_1$ $D_{c1}$ मृत्यूपाख्यानं ; $D_{n1}$ $D_2$ षोडशराजकीयं ; T मृत्युसंवादे रुद्राभिगमनं ; $G_{2-4}$ मृत्युसंवादे ईश्वराभिगमनं ; $G_5$ ईश्वराभिगमनं. — *Adhy. no.* : $B_1$ $D_{n1}$ $D_3$ $G_{2.5}$ 50 ; T $G_{1.3.4}$ M 49. Lines 85–96 = ( var. ) 12. 249. 1–6. T $G_3$ रुद्रः ( for स्थाणुर् ). — ( L. 85 ) $D_{n1}$ प्रजासर्गे. $D_{n1}$ $D_{3-8}$ $G_2$ -निमित्तं च ( $D_8$ ह ; $G_2$ तु ) ; T $G_{1.3-5}$ M -निमित्तत्वात् ( for °त्तं हि ). $G_2$ गतो ( for कृतो ). $B_4$ पुरा ; $D_{n1}$ $D_{7.8}$ T $G_{2-4}$ $M_{3-5}$ प्रभो ; $G_5$ [ अ ]नघ ( for विभो ). — ( L. 86 ) $D_1$ सृष्टा च ( for सृष्टाश्च ). $D_{n1}$ त्वया सृष्टश्च वृद्धश्च ; $D_{7.8}$ °ष्टं च वृद्धं च ; T $G_{2-5}$ $M_{3-5}$ त्वया विसृ( $M_{3-5}$ हि सृ )ष्टा वृद्धास्तु ; $G_1$ $M_{1.2}$ त्वया सृष्टा विवृद्धास्तु ( for the prior half ). $M_{3.4.5}$ ( *sup. lin.* as above ) चतुर्विधाः ( for पृथग्विधाः ). $D_{n1}$ $D_{7.8}$ भूतग्रामं च( $D_{n1}$ °मश्च )तुर्विधं ( for the post. half ). — $D_{7.8}$ read line 87 twice. — ( L. 87 ) $B_4$ $D_{7.8}$ ( both second time ) तास्तत्रैव ; $D_{7.8}$ ( both first time ) त्वमेव च ; T $G_{2-5}$ $M_{3-5}$ तास्त्वयैव ; $G_1$ $M_{1.2}$ चतुर्विधाः ( for तास्त्वेह ). S नश्यंति ( for दह्यन्ति ). $G_1$ $M_{1.2}$ सर्वतः ( for °शः ). $D_7$ ( first time ) विनाशयसि सर्वशः ( for the post. half ). — ( L. 88 ) $D_{n1}$ तन् ; $D_{4.6}$ $G_{3.4}$ तान् ; $D_5$ T $G_2$ $M_3$ तां ( for ता ). $G_1$ कारुण्यात् ( for °ण्यं ). $B_4$ om. the ref. ; $D_{n1}$ $D_{7.8}$ $G_5$ पितामह ( for ब्रह्मा ). — ( L. 89 ) $D_2$ संहर्तुं ( for न क्रुध्ये ). $G_{1.5}$ $M_{1.2}$ कामन्. B $D_{c1}$ नाक्रुध्यं न च कामो मे ; $D_{n1}$ $D_{7.8}$ न क्रोधेन न कामेन ; $D_{n2}$ $D_{1.2.4.6}$ संहर्तुं न च ( $D_{2.6}$ चैव ) कामो मे ; $D_5$ नाहं क्रुद्धो न कामो वा ( for the prior half ). $D_{n1}$ एतदेव ; $G_3$ °देतद् ( for °देवं ). $D_{n1}$ $D_{7.8}$ कृतं ( for इति ). — $D_4$ om. lines 90–91. — ( L. 90 ) $D_{n1}$ पृथिवी- ( for °व्या ). B $D_{c1}$ $D_{n2}$ $D_{1-3.6}$ $G_2$ -कामं तु ; $D_{n1}$ $D_{7.8}$ -कामेन ; $G_5$ ( *sup. lin.* ) -कामार्थं ( for -कामात्तु ). $G_1$ M मा ( for मां ). — ( L. 91 ) T $G_{1.3-5}$ M सत्वा ; $G_2$ सा तु ; $M_1$ ( *inf. lin.* ) धरा ( for हि मां ). $D_{n2}$ om. ( hapl. ) from सदा up to संहा ( in line 94 ). $G_2$ धरा ( for सदा ). $D_{5-8}$ भारार्ता समनूनुदत् ; S भारतो ( $M_{3-5}$ °र्तो ) मामचूचुदत् ( for the post. half ). — ( L. 92 ) $D_{n1}$ $D_{7.8}$ मया ( for महा- ). $G_5$ अपि ( for अभि- ). $D_{n1}$ $D_{7.8}$ भवानभिहितो भृशं ( for the post. half ). — ( L. 93 ) $D_{n1}$ $D_{7.8}$ तेनाहं ; $D_4$ तानहं ; S ततो वै ( for ततोऽहं ). $B_2$ तथा ( for तथ्ये ). $D_{n1}$ $D_{7.8}$ S बुद्ध्या बहु विचारयन् ( for the post. half ). — ( L. 94 ) $B_{1.3}$ अप्रमेयं वै ; $D_{c1}$ ( marg. as above ) °मेयं च ; $D_{n1}$ $D_{7.8}$ S °मेयात्मं( $G_5$ °यं )स्( for °मेयस्य ). $D_4$ संहारास्तदपश्यंतं ( for the prior half ). $D_{n1}$ $D_{7.8}$ मे ; $G_{1.5}$ M मा ( for मां ). $B_{1.2.4.5}$ $D_{n2}$ $D_{2-5.7}$ रुद्र उवाच ; $D_1$ हर उवाच ( for स्थाणुरु° ). — ( L. 95 ) T $G_{1.2}$ M मा क्रुद्धो ; $G_{3.4}$ मा क्रुधो ; $G_5$ मा क्रोधो ( for मा रुषो ). $B_{1-3.5}$ $D_{c1}$ $D_{n2}$ $D_{1-4.6}$ मा रुषो वसुधाधिप ( for the post. half ). — ( L. 96 ) $T_1$ $G_2$ स्थावरं ; $T_2$ $G_{1.3-5}$ M °रांश् ( for °राश् ). $T_1$ $G_2$ चैवं ( for चैव ). T $G_{1.4.5}$ ( *sup. lin.* ) M जंगमांश्च ; $G_5$ महांश्चैव ( for जङ्गमाश्च ). $B_{1.2}$

तव प्रसादाद्भगवन्निदं वर्तेत्त्रिधा जगत् ।
अनागतमतीतं च यच्च संप्रति वर्तते ।
भगवान्क्रोधसंदीप्तः क्रोधादग्निं समासृजत् ।
स दहत्यश्मकूटानि द्रुमांश्च सरितस्तथा । [ 100 ]
पल्वलानि च सर्वाणि सर्वे चैव तृणोलपाः ।
स्थावरं जङ्गमं चैव निःशेषं कुरुते जगत् ।
तदेतद्भस्मसाद्भूतं सर्वं जगदनाविलम् ।
प्रसीद भगवन्स त्वं रोषो न स्याद्वरो मम ।
सर्वे हि नष्टा नेष्यन्ति तव देव कथंचन । [ 105 ]
तस्मान्निवर्ततां तेजस्त्वय्येवेह प्रलीयताम् ।
उपायमन्यं संपश्य प्रजानां हितकाम्यया ।
यथेमे प्राणिनः सर्वे निवर्तेरंस्तथा कुरु ।
अभावं नेह गच्छेयुरुत्सन्नजननाः प्रजाः ।
अधिदैवे नियुक्तोऽस्मि त्वया लोकेषु लोकहन् । [ 110 ]
मा विनश्येज्जगन्नाथ जगत्स्थावरजङ्गमम् ।
प्रसादाभिमुखं देवं तस्मादेवं ब्रवीम्यहम् ।

नारद उवाच ।

श्रुत्वा हि वचनं देवः स्थाणोर्निहतपाप्मनः ।

---

Dn D$_{3-5}$ T G$_{1.3-5}$ M न्यनीनशः ; D$_{6}$ °नशत् ; G$_{2}$ °नशम् (for °नशन्). D$_{7}$ जंगमाश्चापि नीनशैः ; D$_{8}$ जंगमाश्चापि नित्यशः (for the post. half). —(L. 97) Dn$_{2}$ G$_{5}$ M$_{5}$ प्रभावाद् (for प्रसादाद्). Dn$_{1}$ D$_{7.8}$ त्वत्प्रसादाद्धि भगवन् (for the prior half). B$_{1}$ (marg.) भक्ते ; Dn$_{1}$ D$_{7.8}$ S (except G$_{5}$) जातं ; D$_{2}$ यत्ते ; D$_{3}$ वृत्तं (for वर्तेत्). B$_{4}$ इदं सर्वं चराचरं (for the post. half). —(L. 98) B (except B$_{5}$) D$_{1}$ यत्तु ; D$_{2}$ यत्र (for यच्च). D$_{6}$ संपरि- (for संप्रति). —(L. 99) B Dn$_{1}$ D$_{1.7.8}$ S (except M$_{3-5}$) भगवन् (for °वान्). D$_{4}$ om. दीप्तः क्रोधा. B$_{1.3}$ D$_{1}$ अवासृजः ; B$_{2.4.5}$ अवासृजत् (for समा°). Dn$_{1}$ D$_{7.8}$ क्रोधादग्निः समुत्थितः (for the post. half). —(L. 100) B$_{1-3}$ स दर्धति (sic) ; D$_{3.6}$ G$_{2}$ संदहति (for स दहति). B$_{4}$ -संघाश्च (for -कूटानि). Dn$_{1}$ स दहत्परमप्रख्य- (for the post. half). M$_{1.2}$ सरितं. Dn$_{1}$ -द्रुमानश्मसरित्तथा (for the post. half). —(L. 101) Dn$_{1}$ D$_{7.8}$ समुद्रं च (for च सर्वाणि). Dc$_{1}$ सर्वांश् (for सर्वे). B$_{1}$ तृणोल्वणाः ; B$_{4}$ °पमाः ; D$_{1}$ °त्पलाः ; D$_{5}$ °लुपाः ; D$_{6}$ °पलाः (for °लपाः). B$_{3}$ Dn$_{2}$ सर्वांश्चैव तृणोपलाः (Dn$_{2}$ °लुपान्) ; Dn$_{1}$ D$_{7.8}$ सर्वं चैवावृतं जगत् ; D$_{4}$ S सर्वं चैव तृणोपलं (T G$_{2}$ M$_{3.5}$ °लपं) (for the post. half). — Dn$_{1}$ D$_{7}$ om. (hapl.) line 102. Dn$_{2}$ D$_{2-6}$ om. line 103. —(L. 103) B$_{3}$ तदेव (for तदेतद्). B Dc$_{1}$ D$_{1}$ जगत्स्थावरजंगमं ; Dn$_{1}$ (marg.) निःशेषं कुरुते जगत् (for the post. half). —(L. 104) B$_{1}$ शर्वं ; B$_{3}$ T G M$_{1.2.4.5}$ देव ; D$_{1.3}$ सर्वं ; M$_{3.5}$ (*inf. lin.*) महं (for स त्वं). Dn$_{1}$ D$_{4.7.8}$ प्रसीद भगवान्साधो (D$_{4}$ °न्महं) (for the prior half). D$_{7.8}$ एष (for रोषो). D$_{4}$ महान् (for मम). —(L. 105) B$_{4.5}$ D$_{1}$ नश्यंति ; D$_{5}$ त्रस्यंते ; T G$_{3-5}$ तप्यंते ; G$_{1.2}$ M$_{1.2}$ तप्यंति (for नेष्यन्ति). Dc$_{1}$ D$_{2}$ सर्वे हि सृष्टा नश्यंति ; Dn$_{1}$ D$_{7.8}$ सर्वे विनष्टा नेष्यंति ; M$_{3-5}$ सर्वे पुनर्देव नष्टा (for the prior half). D$_{4}$ तदा ; T G$_{2-4}$ सर्वे ; G$_{1.5}$ M$_{1.2}$ पुनर् (for तव). T G M$_{1.2}$ देवाः (for देव). G$_{5}$ कथं जनाः (for कथंचन). M$_{3-5}$ स्थापयंति कथंचन (for the post. half). —(L. 106) M$_{3-5}$ निवर्त्यतां. B$_{1.2.4.5}$ Dc$_{1}$ D$_{1.3.4}$ त्वय्येवेदं ; Dn$_{1}$ D$_{7.8}$ °य्येव सं- ; T त्वयि वैतत् ; G$_{1.5}$ M$_{1.2}$ त्वयि चैव ; G$_{2-4}$ M$_{3-5}$ त्वयि चैतत् (for त्वय्येवेह). —(L. 107) B Dc$_{1}$ Dn$_{2}$ D$_{1-6}$ तत्पश्य देव (B$_{4}$ तव देवस्य) सुभृशं (for the prior half). — B$_{1}$ repeats line 108 after line 111. —(L. 108) M$_{3}$ न नश्येरंस् ; M$_{4.5}$ न नश्येयुस् (for निवर्तेरंस्). —(L. 109) T G M$_{1.2}$ नैव ; M$_{3}$ नो न (for नेह). B$_{1-3}$ D$_{2.3.5}$ उच्छन्न- (for उत्सन्न). Dn$_{1}$ D$_{7.8}$ G$_{1}$ M उच्छ- (G$_{1}$ M °त्स)न्नप्रजनाः प्रजाः ; T G$_{2-4}$ उत्पन्ना बहुधाः (G$_{2}$ बहवः) प्रजाः ; G$_{5}$ उत्पन्नाः सजनाः प्रजाः (for the post half). —(L. 110) B$_{5}$ D$_{2.3}$ आदिदेवे (D$_{2.3}$ °व-) ; Dc$_{1}$ Dn$_{2}$ D$_{7}$ अधिदेव- (D$_{7}$ °वे) (for °दैवे). Dn$_{1}$ D$_{8}$ अधिदै(D$_{8}$ °दे)वेन युक्तोऽसि (for the prior half). Dn D$_{1}$ लोककृत ; D$_{7.8}$ चैव हि (for लोकहन्). — For line 110, S subst.:

भवता हि नियुक्तोऽहं प्रजानां पालने विभो ।

[ T G$_{2-5}$ [अ]भि- (for हि). G$_{3.4}$ M$_{1.2}$ प्रभो. ]

— After line 110, S ins.:

दया तेन ममोत्पन्ना प्रजासु विबुधेश्वर ।

[ G$_{3-5}$ यदा (for दया). G$_{5}$ समुत्पन्ना (for ममो°). ]

—(L. 111) D$_{7.8}$ न भवेद्धि यथानर्थो ; S यन्मया ना- (M$_{3.5}$ मया तन्ना)थवचेदं (for the prior half). D$_{7.8}$ -जंगमे (D$_{8}$ °म). —(L. 112) D$_{7.8}$ प्रसाद्येह (D$_{8}$ °हं) गुरुं देवं ; S प्रसाद्य हि (G$_{2}$ °सीद हि ; G$_{5}$ °पद्येहं) गुरुं देवं (for the prior half). Dn$_{2}$ om. ; D$_{8}$ तस्माद्देवं ; T G$_{2-5}$ M$_{3-5}$ °देतद् (for तस्मादेवं). —(L. 113) T G$_{1.3.4}$ M तु ; G$_{2}$ तद् (for हि). Dn$_{2}$ देव ; S स्थाणोर् (for देवः). S नित्यं (for स्थाणोर्). T G M$_{1.2}$ निहित- (for °हत-). T G$_{3.5}$ (*inf. lin.* as above) -पालनः ; G$_{4}$ -फाल्गुनः (for -पाप्मनः). B D (except D$_{7.8}$) प्रजानां हित-

तेजः संवेष्टयामास पुनरेवान्तरात्मनि ।
ततोऽग्निमुपसंहृत्य भगवाँल्लोकसत्कृतः । [ 115 ]
प्रवृत्तिं च निवृत्तिं च कल्पयामास वै प्रभुः ।
उपसंहरतस्तस्य तमग्निं रोषजं तथा ।
प्रादुर्बभूव विश्वेभ्यः खेभ्यो नारी महात्मनः ।
कृष्णा रक्ताम्बरधरा रक्तजिह्वास्यलोचना ।
कुण्डलाभ्यां च राजेन्द्र तप्ताभ्यां समलंकृता । [ 120 ]
सा विनिःसृत्य वै खेभ्यो दक्षिणां दिशमाश्रिता ।
स्मयमानेव चावैक्षद्देवौ विश्वेश्वरावुभौ ।
तामाहूय तदा देवो लोकादिनिधनेश्वरः ।
मृत्यो इति महीपाल जहि चेमाः प्रजा इति ।
त्वं हि संहारबुद्ध्याथ प्रादुर्भूता रुषो मम । [ 125 ]
तस्मात्संहर सर्वास्त्वं प्रजाः सजडपण्डिताः ।
मम त्वं हि नियोगेन ततः श्रेयो ह्यवाप्स्यसि ।
एवमुक्ता तु सा तेन मृत्युः कमललोचना ।
दध्यौ चात्यर्थमबला प्ररुरोद च सुस्वरम् ।
पाणिभ्यां प्रतिजग्राह तान्यश्रूणि पितामहः । [ 130 ]
सर्वभूतहितार्थाय तां चाप्यनुनयत्तदा ।

Colophon.

नारद उवाच ।

विनीय दुःखमबला आत्मन्येव प्रजापतिम् ।
उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता पुनः ।
त्वया सृष्टा कथं नारी ईदृशी वदतां वर ।

---

कारणे ( D2 °णः; D4 °णं ) ( for the post. half ). — D7.8 om. lines 114–115. — ( L. 114 ) B D ( D7.8 om. ) G1 M तेजः संधार( G1 M °ग्रम )यामास ( for the prior half ). — Lines 115-131 = ( var. ) 12. 249. 7–22. — ( L. 115 ) G5 M1.2 -संगृह्य ( for -संहृत्य ). D3 -भावनः ( for -सत्कृतः ). — ( L. 116 ) B D प्रवृत्तं च निवृत्तं च ( for the prior half ). B Dc1 Dn D1–6 कथयामास ( for कल्प° ). — ( L. 117 ) M3–5 -संहारतस्( for -संह° ). T G2–5 उपसंहृत्यवान्ब्रह्मा ( for the prior half ). B3 D7.8 तदा ( for तथा ). — ( L. 118 ) B Dc1 Dn D1–7 गोभ्यो ( for खेभ्यो ). T G2–5 महामनाः ( for °त्मनः ). D3 चक्षुर्भ्यस्तो महात्मनः ( for the post. half ). — ( L. 119 ) B Dc1 Dn D1–6 कृष्णा र( B2 °क्तर )क्ता तथा पिंगा; D7.8 रक्तकृष्णांबरधरा ( for the prior half ). G2 रक्तगंधानुलेपना ( for the post. half ). — ( L. 120 ) B D तप्ताभ्यां तप्तभूषणा ( for the post. half ). — ( L. 121 ) T G2–5 विनिर्गत्य ( for विनिःसृत्य ). D3 संखेभ्यो; D8 खेभ्योथ ( for वै खेभ्यो ). B1.2.4 Dn D2 सा निःसृत्य तथा ( B1 मुखे; Dn2 भृशं ) खेभ्यो; B3 Dc1 सा निःसृत्य च खेभ्योथ ( Dc1 °भ्यो यद् ); B5 साभिनिःसृत्य खेभ्योथ; D1 सा निःसृत्य च सर्वेभ्यो; D3 सा विनिःसृत्य संखेभ्यो; D4 स निःसृत्य वचस्तेभ्यो; D5 सा निःसृत्य च वै खेभ्यो; D7.8 सा चक्षुर्भ्यो विनिःसृत्य ( for the prior half ). D4 om. (hapl.) from शमाश्रिता up to लोकादि ( in line 123). D1.6 आस्थिता; D7 आश्रया; S आश्रयत् ( for °श्रिता ). — ( L. 122 ) B2 स्तूयमाना ( for स्मय° ). B4 सा ( for च ). B1–3.5 Dc1 Dn2 D1.6 [इ]व सावेक्ष्य; Dn1 D2.3.5 च सावे( Dn1 °वी )क्ष्य; G1 M [इ]व चावेक्ष्य ( G1 M1.2 °पेक्ष्यं ) ( for [इ]व चावैक्षद् ). D5 देवी ( for देवौ ). — ( L. 123 ) D2 ततो ( for तदा ). Dn2 देवीं ( for देवो ). D7.8 तामाह वरदो देवो; S ता( G1 त )माहयत्तदाचिन्त्यो ( G1 M1.2 °दा देवो ) ( for the prior half ). — After line 123, S ins.:

तां तु तत्र तदा देवीं ब्रह्मा लोकपितामहः ।
उक्तवान्मधुरं वाक्यं सांत्वयित्वा पुनः पुनः ।

— ( L. 125 ) B4 -बुद्धयें; D7.8 -बुद्ध्या हि ( for -बुद्ध्याथ ). Dn1 D7.8 रुषा ( for रुषो ). S प्रादुर्भूता मया रोषात्त्वं हि संहारबुद्धिना. — ( L. 126 ) Dn2 D4.5 सज्जनपं( Dn2 °मं )डिताः; D3.6 भूभागमंडिताः; T G1.4 M सजडपंडिताः ( for सजड° ). — After line 126, D7.8 S ins.:

अविशेषेण चैव त्वं प्रजाः संहर भामिनि ।
[ D7.8 निर्विशेषेण ( for अवि° ). ]

— ( L. 127 ) T G2–5 M5 तत्र ( for ततः ). T [s]न्यवाप्स्यसि ( for ह्यवा° ). — Before line 128, S ins. नारदः. — ( L. 128 ) T G1 M1.2 उक्त्वा ( for उक्ता ). D7.8 -मालिनी ( for -लोचना ). — ( L. 129 ) B2 ( marg. as above ) D1.6 च सस्वरं; B1 च सुस्वनं; D5 वसुंधरा ( for च सुस्वरम् ). S प्रावर्तंश्चास्र( M1–3.5 °श्रु )बिंदवः ( for the post. half ). — ( L. 130 ) G5 परिजग्राह ( for प्रति° ). D7.8 तस्य ( for तानि ). — ( L. 131 ) D1.3.6.8 M2–5 अनुनयंस्; T अन्वनयद् ( for अनु° ). D7.8 S भृशं ( for तदा ). — Colophon: *Sub-parvan*: B1.2.4 अभिमन्युवध. — *Adhy. name*: B1.2.4 Dc1 Dn1 मृत्यूपाख्यानं; T G3–5 मृत्युसंभवः. — *Adhy. no.*: B1.2 Dn1 D8 G2.5 51; T G1.3.4 M 50. — *Śloka no.*: Dn1 23. — Lines 132-135 = ( var. ) 12. 250. 1ᵃ–3ᵇ. — ( L. 132 ) D3.6 संजय ( for नारद ). D3.6 सा बाला; D4 अचला ( for अबला ). B1.3–5 D1 आत्मना; Dc1 Dn1 ह्यात्मना; D7.8 संमान्य ( for आत्मनि ). D7.8 एवं ( for एव ). — ( L. 133 ) D7.8 लतेवाकंपिता स्म ह; S °वानिलकंपिता

क्रूरं कर्माहितं कुर्यां मूढेव किमु जानती । [ 135 ]
बिभेम्यहमधर्माद्धि प्रसीद भगवन्प्रभो ।
प्रियान्पुत्रान्वयस्यांश्च भ्रातॄन्मातृः पितॄन्पतीन् ।
अनुध्यास्यन्ति ये देव मृतांस्तेषां बिभेम्यहम् ।
कृपणानां हि रुदतां ये पतन्त्यश्रुबिन्दवः ।
तेभ्यो हि बलवद्भीता शरणं त्वाहमागता । [ 140 ]
यमस्य भवनं देव न गच्छेयं सुरोत्तम ।
प्रसादये त्वा वरद मूर्ध्नोदग्रनखेन च ।
एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह ।
इच्छेयं त्वत्प्रसादाद्धि तपस्तप्तुं प्रजेश्वर ।
प्रदिशेमं वरं देव त्वं मह्यं भगवन्प्रभो । [ 145 ]
त्वया ह्युक्ता गमिष्यामि धेनुकाश्रममुत्तमम् ।
तत्र तप्स्ये तपस्तीव्रं तवैवाराधने रता ।
न हि शक्ष्यामि देवेश प्राणान्प्राणभृतां प्रियान् ।
हर्तुं विलपमानानामधर्मादभिरक्ष माम् ।

ब्रह्मोवाच ।

मृत्यो संकल्पितासि त्वं प्रजासंहारहेतुना । [ 150 ]
गच्छ संहर सर्वास्त्वं प्रजा मा ते विचारणा ।
भविता त्वेतदेवं हि नैतज्जात्वन्यथा भवेत् ।
भवत्वनिन्दिता लोके कुरुष्व वचनं मम ।

नारद उवाच ।

एवमुक्ताभवद्भीता प्राञ्जलिर्भगवन्मुखी ।

( for the post. half ). — Before line 134, MSS. ins. मृत्युरुवाच. — ( L. 134 ) D2 मया ( for त्वया ). B3 ( marg. ) सुदृशी ; D7 S मादृशी ( for ई° ). — ( L. 135 ) Dn2 D3-8 क्रूर- ; D2 ब्रूहि ( for क्रूरं ). G1 M1.2 ईदृशं ( for अहितं ). Dn2 D3.4.7.8 G1 M कुर्यात् ( for कुर्यां ). B1.3 Dc1 Dn D1.4-6 तदेवं ; B2.4.5 D2.3 °व ( for मूढेव ). D7.8 निमु( D8 °य )ता सती ; G1 M किमजानती ( for किमु जा° ). — ( L. 136 ) D7 अधर्मस्य ; T G2-5 अधर्माय ( for °द्धि ). — Lines 137-144 = ( var. ) 12. 250. 5-8. — ( L. 138 ) B Dc1 Dn D1-6 अप- ( for अनु- ). Dc1 ( by corr. ) -धास्यंति ( for -ध्या° ). B Dc1 Dn D1-4.6 मे ; D5 चेद् ( for ये ). D7.8 अवध्याः संति ये देव ( for the prior half ). B Dc1 Dn D1-3.5.6 मृतेभ्येभ्यो ; D4 मृतकेभ्यो ( for मृतांस्तेषां ). — ( L. 139 ) D1 वि- ( for हि ). D7.8 S कृपणाश्रुपरिक्लेशात् ( D7.8 °क्लेशात् ; G4.5 °क्लेशात् ) ( for the prior half ). D6 om. ये. D7.8 S पतेयं ( D8 पतेयुः ; G4.5 तेयं ) शाश्वतीः समाः ( for the post. half ). — D6 om. lines 140-141. — ( L. 140 ) S [ऽ]ति ( for हि ). B D ( except D7.8 ; D6 om. ) तेभ्योहं भगवन्भीता ( for the prior half ). D7.8 तु ( for त्वा ). B1 M1.2 शरणं त्वामुपागता ; B3.4 D4 °णं त्वामहं गता ( for the post. half ). — ( L. 141 ) Dn2 भगवन् ; T G2-4 सदनं ( for भवनं ). G5 चैव ( for देव ). B2.5 Dn1 D2 गच्छेयं न ( by transp. ). T G2-5 M5 ( orig. ) प्रजा रोद्धुं ( M5 वोढुं ) न चोत्सहे ; G1 M ( M5 *sup. lin.* ) यातना स्वर्गमुत्तमं ( for the post. half ). — ( L. 142 ) B1.3.5 Dc1 Dn D1.3-8 त्वां ; B4 [ऽ]हं ( for त्वा ). Dn2 D3.5.6 G3 वरदं ( for °द ). B2 D2 कायेन विनयोपेता ( for the prior half ). D7.8 दश- ( for [उ]दग्र- ). B4 Dc1 Dn1 -मुखेन ( for -न° ). S मूर्ध्ना देववर प्रभो ( for the post. half ). — ( L. 143 ) T G3.4 M3-5 एकम् ( for एतद् ). D7.8 वै ; T G M3-5 मे ; M1.2 ते ( for [अ]हं ). D3.6 दत्तं ( for त्वत्तो ). — ( L. 144 ) D7 इच्छेहं ( for °यं ). B Dn2 D2-6 -प्रसादाद्धि ; G1 M1.2 °देन ( for °दाद्धि ). D3.6 जनेश्वर ( for प्रजे° ). — ( L. 145 ) D1.4.7.8 प्रादिश ( for प्र° ). D7.8 एवं ( for इमं ). — ( L. 146 ) S त्वयोक्ताहं ( for त्वया ह्युक्ता ). Dc1 Dn1 धेनुकारण्यम् ( for °श्रमम् ). D7.8 धेनुग्राममनुत्तमं ( for the post. half ). — ( L. 147 ) B2 om. ने रता. T G2-4 तवैवाराधनेन हि ( for the post. half ). — ( L. 148 ) B4 om. from न हि up to संहर ( in line 151 ). D1.5 T G3 शक्यामि. G2 अहं ( for प्रियान् ). — ( L. 149 ) D6 हंतुं ( for हर्तुं ). B1.3 Dc1 Dn2 D1.3-6 त्वमि- ; Dn1 चापि ; D7.8 चाभि- ( for अभि- ). D2 -रक्षतां ( for -रक्ष मां ). S अधर्मं चापि रक्षितुं ( for the post. half ). B2 om. the ref. — Lines 150-155 = ( var. ) 250. 9-11. — ( L. 150 ) D3 G1 मृत्योः ( for मृत्यो ). D7.8 वै ; T G M3-5 मे ( for [अ]सि ). M1.2 मृत्योः संकल्पितामर्थं ( for the prior half ). S प्रजासंहरणं तु ( G2 °णाय ; M3-5 °णेन ) वै ( for the post. half ). — ( L. 151 ) D3.6 मात्र ( for मा ते ). — ( L. 152 ) Dn1 reads from त्वेतद् up to भीता ( in line 154 ) on marg. D3 भावितेति ; D7.8 भविष्यति ( for भविता तु ). G1 M1.2 एवमेतद् ( by transp. ). T G2-4 M3-5 न तज् ; G1 M1.2 तत्र ( for नैतज् ). — ( L. 153 ) B3 भवेत्तु ( for भवतु ). Dn1 लोकं. D7.8 त्वमात्मनिंदिता लोके ; S तस्मादनिंदिते ( G5 °ता ) काले ; G5 ( before corr. ) तस्मादनिर्जिता काले ( for the prior half ). B2 G3 om. the ref. — ( L. 154 ) D3 M1.2 उक्त्वा ( for उक्ता ). B2 D2 G1 M1.2 प्रीता ; Dn2 lacuna ( for भीता ). T G2-5 एवमुक्ता भगवता ( for the prior half ). D5 प्रांजलीस्तमवाङ्मुखी ; T G2-5 M5 ( *inf. lin.* ) °लिश्चाप्यवाङ्मुखी ; G1 M °लिर्भगवतोन्मुखी ( for the post. half ). — B4 om. lines

संहारे नाकरोद्बुद्धिं प्रजानां हितकाम्यया । [ 155 ]
तूष्णीमासीत्तदा देवः प्रजानामीश्वरेश्वरः ।
प्रसादं चागमत्क्षिप्रमात्मन्येव पितामहः ।
स्मयमानश्च लोकेशो लोकान्सर्वानवैक्षत ।
लोकाश्चासन्यथापूर्वं दृष्टास्तेनापमन्युना ।
निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते । [ 160 ]
सा कन्यापि जगामाथ समीपात्तस्य धीमतः ।
अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा ।
त्वरमाणा च राजेन्द्र मृत्युर्धेनुकमभ्ययात् ।
सा तत्र परमं तीव्रं चचार व्रतमुत्तमम् ।
समाहितैकपादेन तस्थौ पद्मानि षोडश । [ 165 ]
पञ्च चान्यानि कारुण्यात्प्रजानामभयैषिणी ।
इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः संनिवर्त्य सा ।
ततस्त्वेकेन पादेन पुनरन्यानि सप्त वै ।
तस्थौ पद्मानि षट् चैव सप्त चैकं च पार्थिव ।
ततः पद्मायुतं तात मृगैः सह चचार सा । [ 170 ]
पुनर्गत्वा ततो नन्दां पुण्यां शीतामलोदकाम् ।
अप्सु वर्षसहस्राणि सप्त चैकं च सानयत् ।
धारयित्वा तु नियमं नन्दायां वीतकल्मषा ।
सा पूर्वं कौशिकीं पुण्यां जगाम नियमे धृता ।
तत्र वायुजलाहारा चचार नियुतं पुनः । [ 175 ]
पञ्चगङ्गे च सा पुण्ये कन्या वेतसकेषु च ।

155–160. G4 om. lines 155–157. — (L. 155) G1 M1.2 संहाराय (for संहारे न). — Lines 156–158 = (var.) 250. 12^c–13^d. — (L. 156) D7.8 ततो (for तदा). D1.4.5.7 M1.2 देव (for देवः). G1.5 M (M5 *sup. lin.* also as above) प्रजानामीश्वरः प्रभुः (for the post. half). —(L. 157) G1 M1.2 अगमत्; G5 (by corr.) चाभवत् (for चागमत्). D1.3 आत्मना (for आत्मनि). B2 D2 आत्मनैव प्रजापतिः (for the post. half). — (L. 158) D2 S (except G2) देवेशो (for लोकेशो). B (B1 om.) Dc1 Dn D1–6 अवेक्ष्य (Dn2 °क्ष) च (for अवैक्षत). — (L. 159) B2 D2.5 तु; M3–5 हि (for च). Dn2 D3 लोकावासं यथापूर्वं (for the prior half). D3.6 सृष्टास् (for दृ°). D4 (before corr.) दृष्टास्तेनापमृत्युना; G1 M1.2 °त्ममन्युना (for the post. half). — Lines 160–165 = (var.) 250. 14–16. — (L. 160) M4 -दोषे (for -रोषे). B5 तस्मिन्निवृत्तरोषे तु (for the prior half). — (L. 161) B1.3.4 Dc1 Dn D1 कन्याप-; D3.6 च कन्या; D4 कन्या*; D5 कन्या च (for कन्यापि). D7.8 सा तु कन्या उपक्रांता (for the prior half). — (L. 162) D4.7.8 G1.5 प्रतिश्रुत्य (for [अ]प्र°). Dn2 D3.5 अथ मृत्युः प्रतिश्रुत्य (for the prior half). D4.5 -संहरणात्; G4 -संरक्षणं (for -संहरणं). B2 Dn2 तथा (for तदा). D3 प्रजानां हरणं तदा (for the post. half). — (L. 163) G1 M1.2 [अ]थ (for च). B3.5 Dc1 Dn D2 अभ्यगात् (for °यात्). — (L. 164) Dc1 Dn1 G2 M3–5 चकार (for चचार). D7.8 T G3–5 चका(D7 °चा)र तप उ(T तपमु)त्तमं (for the post. half). —(L. 165) B Dc1 Dn D1–8 सा तदा (D4 °था) ह्येकपादेन; D7.8 सा मनस्येक°; T G समानामेक° (for the prior half). — (L. 166) B2.4.5 D1 चाब्दानि; Dn D2–6 [अ]न्यानि तु; D7.8 त्वान्यानि (for चा°). B Dc1 Dn D1–6 तु (D5 च) हितैषिणी; G5 (*inf. lin.* as above) अंद्दैषिणी (sic) (for अभयै°). —(L. 167) D7 प्रियार्थेभ्यः (for [इ]न्द्रिया°). T G2–5 संनिवार्य (for संनिवर्त्य). — (L. 168) D7.8 च (for तु). S (except G5) ततस्त्वेकपदेनैव (for the prior half). Dn1 तस्थौ पद्मानि; D2 पुण्यारण्यानि (for पुनरन्यानि). — Lines 169–171 = (var.) 250. 19–20. — (L. 169) B2 (marg.).3.4 Dn2 D3.6 षट् द्वौ च; D7.8 पंचैव (for षट्चैव). D1 सप्त (for सप्त). D5 तु (for च). T G3.4 सप्त पंचैव वै नृप; G1.2 M सप्तकं चैव वै नृप (G1 M1.2 पुनः) (for the post. half). — (L. 170) G1 M तत्र (for ततः). T G2–5 तत्र वर्षायुतं चैव (G5 तात) (for the prior half). D7.8 मेरौ सम्यक्चचार ह (for the post. half). — (L. 171) Dn2 D3.5.6 नद्यां; T G2–4 गंगां (for नन्दां). Dn1 D7 पुण्य- (for पुण्यां). Dn2 तोया पुण्यामलोदकौ (sic); S पुण्यां शीतजलां शिवां (G1.5 M शुभां) (for the post. half). — (L. 172) D3 अत्र (for अप्सु). D4 वा (for च). B4 चारयत्; D7.8 T G2–5 M3–5 सावसत्; G1 M1 सातपत्; M2 सापतत् (for सानयत्). — (L. 173) D7.8 S तं पार(G1 M1.2 तत्पार-; M3.4 तं वार)यित्वा नियमं (for the prior half). T G2–5 गंगायां (for नन्दायां). — (L. 174) B2 पूर्णं; D7.8 पूर्वे; S पुनः (for पूर्वं). B5 D2 नियमैधिता; Dn1 नियमे वृता; D3 T G1–4 M °नैवृंता (T G3 °तां); G5 °मैधृंता (for नियमे धृता). —(L. 175) D7 मित्र- (for वायु-). Dn2 D8 -जलाधारा; G1 °हारे (for °हारा). B D नियमं; G1 M1.2 नियतं (for नियुतं). B4 (also as above) ततः (for पुनः). — (L. 176) Dc1 G2 पंचगंगेव; G5 °गंगेपि (for °गङ्गे च). B3–5 Dc1 Dn1 D1 पुण्या (for पुण्ये). Dn2 पंचगंगायुता पुण्या; D2.3.6 °गंगेषु सा पुण्या; D4 °कन्यैव सा पुण्या;

तपोविशेषैर्बहुभिः कर्शयद्देहमात्मनः ।
ततो गत्वा महागङ्गां महामेरुं च केवलम् ।
तस्थौ चाश्मेव निश्चेष्टा प्राणायामपरायणा ।
पुनर्हिमवतो मूर्ध्नि यत्र देवा पुरायजन् । [ 180 ]
तत्राङ्गुष्ठेन सा तस्थौ निखर्वं परमा शुभा ।
पुष्करेष्वथ गोकर्णे नैमिषे मलये तथा ।
अकर्शयत्स्वकं देहं नियमैर्मनसः प्रियैः ।
अनन्यदेवता नित्यं दृढभक्ता पितामहे ।
तस्थौ पितामहं चैव तोषयामास धर्मतः । [ 185 ]
ततस्तामब्रवीत्प्रीतो लोकानां प्रभवोऽव्ययः ।
मृत्यो किमिदमत्यर्थं तपांसि चरसीति ह ।
ततोऽब्रवीत्पुनर्मृत्युर्भगवन्तं पितामहम् ।
नाहं हन्यां प्रजा देव स्वस्थाश्चाक्रोशतीस्तथा ।
एतदिच्छामि सर्वेश त्वत्तो वरमहं प्रभो । [ 190 ]
अधर्मभयभीतास्मि ततोऽहं तप आस्थिता ।
भीतायास्तु महाभाग प्रयच्छाभयमव्यय ।
आर्ता चानागसी नारी याचामि भव मे गतिः ।
तामब्रवीत्ततो देवो भूतभव्यभविष्यवित् ।
अधर्मो नास्ति ते मृत्यो संहरन्त्या इमाः प्रजाः । [ 195 ]
मया चोक्तं मृषा भद्रे भविता न कथंचन ।
तस्मात्संहर कल्याणि प्रजाः सर्वाश्चतुर्विधाः ।
धर्मः सनातनश्च त्वा सर्वथानुप्रवेक्ष्यति ।

---

D5. 7. 8 °गंगे महा( D7. 8 सदा )पुण्ये ( for the prior half ). D1 गंगा ( for कन्या ). B1 ( marg. ). 3. 4 वैतसकेषु च ; B3 ( marg. ) वेत्रवनेषु च ; D7. 8 वेत्रसके पुनः ; T G3-5 वै( G5 वे )तंसिकेषु च ; G1 M वैतंसकेषु च ; G2 वैप्रांक° ( for वेत्रसकेषु च ). — ( L. 177 ) D7. 8 S निर्विघैः ( for बहुभिः ). B1. 3 Dc1 Dn1 D1 कर्ष( Dc1 Dn °र्ष )ती ; B2. 4. 5 Dn2 D2. 5. 6 कर्षयद् ; D3. 4 कर्षयन् ; T G3. 4 M3. 4 कर्शयन् ; G1 M1. 2 °येद् ( for कर्शयद् ). D7. 8 कर्ष( D8 °र्श )यंतीय( D8 °तीत्र )मात्मनः ( for the post. half ). — Lines 178-181 = ( var. ) 250. 22ᵃ-23ᵇ. — ( L. 178 ) B Dc1 Dn D1 ( before corr. ). 2-6 तु ( B1 च ) सा गंगां ; D1 ( by corr. ) तु गंगां तां ; T G2-5 महाभागां ( for °गङ्गां ). D6 अब्दमेकं ( for महामेरुं ). M3. 5 पर्वतं ( for केवलम् ). — ( L. 179 ) Dn1 चाश्मनि ; D3 चासौ च ; D7. 8 T G2-4 M1. 5 अश्मेव ( for चाश्मेव ). Dn2 तस्थौ चाश्मे ( sic ) निनिश्चेष्टा ; G5 तस्मिन्नेव च निश्चेष्टा ( for the prior half ). — ( L. 180 ) S ततो ( for पुनर् ). B5 D4. 5 G4. 5 ( before corr. ) [अ]जयन् ; D1 [अ]जपन् ( for [अ]यजन् ). — ( L. 181 ) D1 om. सा. D3. 6 तस्थौ च ( for सा तस्थौ ). G1. 2 M परमं शुभा ( G1 °भं ); G5 °मांगना ( for °मा शुभा ). Dn1 D7. 8 निखर्वाणां परं शतं ( Dn1 शुभं ); D3. 6 नित्यं यूपोपमा शुभा ; T G3. 4 निर्वाणं परमं गतं ( for the post. half ). — ( L. 182 ) D8 पुष्करेष्वथ ( for °ष्वथ ). D7. 8 नैमिषेमरकंटके ; S नैमिशे ( G2 °षे ) मलयेषु च ( for the prior half ). — ( L. 183 ) B D अवाकर्षत ; M2. 3 अकर्षयत् ( for अकर्श° ). B3 Dn1 D1. 4 मा( D1 म )नस- ; D6 G1 M1. 2 मनसि ( for °सः ). Dn1 सह ; D6 श्रियैः ( for प्रियैः ). — ( L. 184 ) Dn2 D6 सानन्य- ( for अनन्य- ). Dn2 D3. 6 दृढं ; D7. 8 बाढम् ( for दृढ- ). Dn2 शक्त्या ; D1. 3 -भक्त्या ; D2 G1 M -भक्तिः ; D7. 8 उक्ता ( D8 °क्त्वा ) ( for -भक्ता ). — Lines 185-189 = ( var. ) 250. 23ᶜ-25ᵈ. — ( L. 185 ) G5 ( *inf. lin.* ) दध्यौ ( for तस्थौ ). D1 सा चैवं तोषयामास ( for the prior half ). T G2-4 यत्नतः ( for धर्मतः ). D1 सर्वतः कामरूपिणी ; M3 तोषयंती सधर्मतः ( for the post. half ). — ( L. 186 ) D6 प्रीत्या ( for प्रीतो ). D7. 8 पुरुषो ( for प्रभवो ). — After line 186, B D ins.:

सौम्येन मनसा राजन्प्रीतः प्रीतमनास्तदा ।

[ Dn1 महता ( for मनसा ). D1 om.; D7. 8 प्रीत्या ( for प्रीतः ). ]

— ( L. 187 ) D7. 8 एतद् ( for इदम् ). B2-5 Dn2 D2. 3. 5. 6 अत्यंतं ( for अत्यर्थं ). Dn1 G4 चरति ( for °सि ). G4 इह ( for इति ). B5 Dn2 D2. 5 हि ; Dn1 [इ]ह ; D8 च ; G1 वै ; G5 नः ( for ह ). — ( L. 188 ) G5 सा च ( for ततो ). — ( L. 189 ) S स्वस्थाश्च क्रोशतीः प्रभो ( for the post. half ).. — ( L. 190 ) D4 G2 देवेश ( for सर्वेश ). D7. 8 वरं त्वत्तः परं प्रभो ( for the post. half ). — ( L. 191 ) D7. 8 तपसा स्थिता ( for तप आ° ). — ( L. 192 ) G2 भीतायां ( for °यास् ). D7. 8 S मे ( for तु ). B1. 5 उत्तमं ; Dc1 Dn D1-6 अव्ययं ( for अव्यय ). D7. 8 प्रयच्छानामयं यथा ; S प्रदेहि वरमव्ययं ( T G2 M4. 5 °य ) ( for the post. half ). — ( L. 193 ) D7. 8 S च त्वां ( T G1-4 M1. 2 त्वा ) ( for नारी ). G5 याचामि त्वापरां गतिं ( for the post. half ). — Lines 194-195 = ( var. ) 250. 32. — ( L. 194 ) S तदा ( for ततो ). D7. 8 ब्रह्मा ( for देवो ). D3. 6-8 S -भविष्यकृत् ( for °वित् ). — Before line 195, S ins. ब्रह्मा. — ( L. 195 ) D4 भद्रे ( for मृत्यो ). Dn2 D3. 4. 5 संहरत्या ; D7. 8 °रस्व ( for संहरन्त्या ). D3 इमां ( for इमाः ). — ( L. 196 ) Dn2 माधवोक्तं ( for मया चोक्तं ). D2 G2 कदाचन ( for कथं° ). — Dc1 reads lines 197-198 on marg. *sec. m.* — ( L. 197 ) Dn2 D3. 5 असात् ( for

लोकपालो यमश्चैव सहाया व्याधयस्तथा ।
अहं च विबुधाश्चैव पुनर्दास्याम ते वरम् । [ 200 ]
यथा त्वमेनसा मुक्ता विरजाः ख्यातिमेष्यसि ।
सैवमुक्ता महाराज कृताञ्जलिरिदं विभुम् ।
पुनरेवाब्रवीद्वाक्यं प्रसाद्य शिरसा तदा ।
यद्येवमेतत्कर्तव्यं मया न स्याद्विना प्रभो ।
तवाज्ञा मूर्ध्नि मे न्यस्ता यत्ते वक्ष्यामि तच्छृणु । [ 205 ]
लोभः क्रोधोऽभ्यसूयेर्ष्या द्रोहो मोहश्च देहिनाम् ।
अह्रीश्चान्योन्यपरुषा देहं भिन्द्युः पृथग्विधाः ।

ब्रह्मोवाच ।

तथा भविष्यते मृत्यो साधु संहर वै प्रजाः ।
अधर्मस्ते न भविता नापध्यास्याम्यहं शुभे ।
यान्यश्रुबिन्दूनि करे समासते [ 210 ]
ते व्याधयः प्राणिनामात्मजाताः ।
ते मारयिष्यन्ति नरान्गतासू-
न्नाधर्मस्ते भविता मा स्म भैषीः ।
धर्मो मृत्यो मारणे प्राणिनां ते
त्वं वै धर्मस्त्वं हि धर्मस्य चेशा । [ 215 ]
धर्म्या भूत्वा धर्मनित्या धरित्री
तस्मात्प्राणान्सर्वथेमान्नियच्छ ।
सर्वेषां वै प्राणिनां कामरोषौ
संत्यज्य त्वं संहरस्वेह जीवान् ।

---

त° ). G2 चतुर्वर्गा इमाः प्रजाः ( for the post. half ). — ( L. 198 ) B Dc1 Dn D1–6 G3–5 M3.4 त्वां ( for त्वा ). G2 सर्वथा. D7.8 धर्मं सनातनं च त्वं ( for the prior half ). Dc1 Dn D1–6 सर्वथा पाव( Dc1 पाय· ; Dn2 D3.6 पाल )यिष्यति ; D7.8 °था प्रापयिस्य( D8 °ष्य )सि ( for the post. half ). — ( L. 199 ) B2 ( marg. also as above ) Dc1 लोकपाला ; D7.8 S ह्र( G5 स )र्वः कालो ( for लोकपालो ). B Dc1 Dn1 D1.7.8 S च ते ( G5 ये ) ( for तथा ). — Line 200 = ( var. ) 12. 250. 28[cd]. — ( L. 200 ) B5 अयं ( for अहं ). B2 ( marg. as above ).8 दास्यामि ( for °म ). T G3.4 वरान्. D7.8 G1.2.5 M पुनर्दास्यामि ते ( D7.8 G5 °महे ) वरान् ( for the post. half ). — Dc1 om. lines 201–202. — ( L. 201 ) B1.3 D1.6 त्यक्ता ; Dn D3–5 युक्ता ( for मुक्ता ). D7 यैस्त्वमुक्तैर्न सा मुक्ता ; D8 यैस्त्वं युक्तैर्न सा मुक्ता ; S यैस्त्वं युं( G5 मु )क्ता भयान्मु( G5 °यामु )क्ता ( for the post. half ). — ( L. 202 ) B1.3 Dn1 S ( G5 lacuna ) प्रभुं ; D7.8 वचः ( for विभुम् ). — Before line 204, S ( except G5 ) ins. मृत्युः. — ( L. 204 ) T G1.3–5 M एतदेवं ( by transp. ); G2 एवमेव. B1.4.5 विभो ( for प्रभो ). D7.8 मया तत्रान्यथा भवेत् ; S धर्मतो ( G1 M1 इति मे ; G5 M3–5 इह मे ; M2 इति ह ) नास्त्यतो भयं ( for the post. half ). — ( L. 205 ) D7.8 त्वद्वाक्यं ( for तवाज्ञा ). D7.8 न्यस्तं ; M1.2 [ऽ]न्यत्तु ( for न्यस्ता ). B1.3 Dc1 D1 S तु ; D7.8 च ( for ते ). — ( L. 206 ) D3.6 कामः ( for लोभः ). Dn1 D2 क्रोधा ; T क्रोधे ( for क्रोधो ). T G2–4 ह्यसूयेर्ष्या ( for ऽभ्य° ). D7.8 द्रोहमोहाश्च ; T G2–4 मोहो द्रोहश्च ( by transp. ). Dc1 Dn1 D1 द्वेषो ; G5 damaged ( for द्रोहो ). D3.6 लोभश्च ( for मोहश्च ). B1.5 देहिनः ; G5 °नं ( for °नाम् ). — ( L. 207 ) D3 एतैश्च ( for अह्रीश्च ). Dc1 Dn2 D3–6 ·पुरुषा ; D7.8 ·जनिता ( for ·परुषा ). S ( except G1 ) अप्रियान्योन्यजनिता ( T G3 °तान् ) ( for the prior half ). B1.3–5 D1.5 T G2–5 देहान् ( for देहं ). Dn2 D1–3.6–8 भिद्युः ; D5 निन्द्युः ( for भिन्द्युः ). D3 पृथग्विधं. Dc1 Dn1 G1 M देहान्भिद्युः ( Dc1 °हान्भिद्युः ; Dn1 °हान्भि· त्वा ) पृथग्विधान् ( for the post. half ). — Lines 208–212 = ( var. ) 250. 32–33. — ( L. 208 ) G5 M3–5 भविष्यति ( M5 °ते ) तथा मृत्यो ( for the prior half ). D2 भो ; D6 ते ; Bom. ed. भोः ( for वै ). D5 प्रजां ( for प्रजाः ). — ( L. 209 ) B3 D1 नापध्यास्यामहे शुभे ; Dc1 तापाध्यायामहे शुभे ( sic ); Dn1 तथा ध्यायाम्यहं शुभे ; Dn2 मा वध्यास्याम्यहं शुभे ; D4 नापध्यास्यामहं प्रभो ; D5 तद्विधास्याम्यहं प्रभो ; D7.8 तथा ध्या( D8 धा )स्यामहं शुभे ; S तथा ध्या( G3–5 °था दा )स्यामि ( G4 °म ) ते भयं ( G1 M शुभं ) ( for the post. half ). — ( L. 210 ) B Dc1 Dn1 D1.8 समासंस्थ ; D5 corrupt ; S तत्रासंस्थ ( for समासते ). — ( L. 211 ) D4.5 तद् ( for ते ). D4 om. ( hapl. ) from प्राणिना up to मारणे ( in line 214 ). D7.8 ते व्याधयः प्राणविनाशनाय ; S ते व्याधयः प्राणिनां देहजाः स्युः. — ( L. 212 ) B2 ( marg. ).4 संहरिष्यंति ( for मारयि° ). Dn2 reads from नरान् up to धरित्री ( in line 216 ) twice ( without var. ). M1.2 हतासून्. — ( L. 213 ) B Dc1 Dn D1–3.5.6 नाध( B2 माध· ; D3 नोध )र्मस्ते भविता प्राणिनां वै ( B3 Dc1 चेत् ); G2 धर्मो न मृत्यो मरणे प्राणिनां वै. — ( L. 214 ) D7.8 हरणे ( for मारणे ). B D4 वै ( for ते ). — ( L. 215 ) D8 तं ( for त्वं ). T G1.4 M सर्वस्य ; G3 विश्वस्य ( for धर्मस्य ). B3.4 Dc1 Dn D3.5.6 चेष्टा ; B5 वेगः ; D1 चैषा ; D4 चैषः ; D7.8 देहः ; T देशा ; G2.5 चैशा ( for चेशा ). — ( L. 216 ) Dn2 D7.8 S ( except G5 ) धर्मो ; D4 धर्मा ( for धर्म्या ). B3 धर्मनिष्ठा ; D3 °भूता ; D7.8 °नित्यो ; M1 °भूत्वा ( for °नित्या ). D4

एवं धर्मस्ते भविष्यत्यनन्तो [ 220 ]
मिथ्यावृत्तान्मारयिष्यत्यधर्मः ।
तेनात्मानं पावयस्वात्मना त्वं
पापेऽऽत्मानं मज्जयिष्यन्त्यसत्त्वाः ।
तस्मात्कामं रोषमप्यागतं त्वं
संत्यज्यातः संहरस्वेह जीवान् । [ 225 ]
नारद उवाच ।
सा वै भीता मृत्युसंज्ञोपदेशा-
च्छापाद्भीता बाढमित्यब्रवीत्तम् ।
सा च प्राणान्प्राणिनामन्तकाले
कामक्रोधौ त्यज्य हरत्यसक्ता ।
मृत्युस्तेषां व्याधयस्तत्प्रसूता [ 230 ]
व्याधी रोगो रुज्यते येन जन्तुः ।
सर्वेषां वै प्राणिनां प्रायणान्ते
प्राणा गत्वा संनिवृत्तास्तथैव ।
वायुर्भीमो भीमनादो महौजा

धरित्र्यां ( for धरित्री ). —( L. 217 ) Dc1 Dn1 D1 प्राणिनः ; D5 सर्वां ( for प्राणान् ). D3 एतान् ; D7. 8 एषां ( for इमान् ). G3 [अ]भिगच्छ ( for नियच्छ ). — After line 217, S ins.:

पाप्मा तथा ते भविता कदाचि-
देवं मया वै विनियुज्यसे त्वम् ।

[ ( L. 1 ) G1 M न चान्यथा ; G6 ततोन्यथा ( for पाप्मा तथा ). T G3. 4 नो ( for ते ). G1 M1. 2. 4 कथंचिद्. — ( L. 2 ) G1 M1. 2. 4 चैव ( for वै वि- ). M3. 5 विनियोज्यसे. ]

— ( L. 218 ) Dn2 D3. 6 om.; D4 च ( for वै ). G5 कामकारान् ; M3-5 दर्परोषौ ( for काम° ). — ( L. 219 ) B2 संयुज्य ( for संत्यज्य ). D2 [अ]तः ( for त्वं ). B3 G1 संहरस्वेव ( sic ) ; B3 M4. 5 °स्वैव ; Dn2 °स्वेह ( sic ) ; D7. 8 °स्वेष ; T G2-5 संहर सर्व- ( G5 °र्वे ) ; M1. 2 °सेव ( sic ) ( for °स्वेह ). B4 Dn2 D1. 3. 5. 6 जीवं ( for जीवान् ). — ( L. 220 ) T G4 येषां ; G3 एषां ( for एवं ). B Dc1 Dn1 D1-6 G2 त्वां ; Dn2 D5 ( also as above ) सं- ( for ते ). B1 भजिष्यति ; D4 भविष्यत ; T G1 भविष्यंति ( for °ष्यति ). D4 धृत्वा ( for [अ]नन्तो ). — ( L. 221 ) Dn2 मिथ्या वृत्यायं ( sic ) ; D4 प्रजाः सर्वा ; G2 मिथ्यावृत्तो ( for °वृत्तान् ). Dc1 Dn1 सादयिष्यति ; D5 मानयि° ( for मारयि° ). D4 अधर्मतः ; G2 अनंतः ( for अधर्मः ). — ( L. 222 ) Dc1 पाचयस्व ; Dn1 D1 पावयेश्च ( D1 °च ) ; D4 पातयस्व ; T G1. 3. 4 M ( M5 orig. ) प्लावयस्व ; G2 M5 ( *inf. lin.* ) पाल° ; G6 ( *inf. lin.* as above ) पावयित्वा ( for पावयस्व ). B1. 3-5 Dc1 [अ]त्यये त्वं ; Dn1 [आ]त्मने त्वं ; D1 [आ]त्मदेहं ; D5 °पापा ; T G1-4 M व्यपेक्षं ; G6 स्ववैक्ष्य ( for [आ]त्मना त्वं ). D7. 8 तेनाध( D7 °न ध )र्मे पावयस्वाव्यये त्वं. — ( L. 223 ) B1. 5 पापात्मानं ; B4 D5 T G1. 3-6 M पापात्मानो ; Dn1 पापेष्वात्मानं ; Dn2 D1. 6 पापेना° ; D7. 8 पाप्मानं वै ; G2 अपाप्मानो ( for पापेऽऽत्मानं ). B1 मज्जयिष्यसि ; Dc1 Dn1 D3-5. 7. 8 T °यिष्यति ( for मज्जयिष्यन्ति ). B Dc1 Dn1 D3 असत्यात् ; Dn2 D5 G1-4 M असंतः ; D1 सत्यात् ; D7. 8 अधर्मः ; T अनंतः ; G5 संतः ; G5 ( *inf. lin.* ) अधर्मः ( for असत्त्वाः ). — ( L. 224 ) Dc1 Dn1 तथा ( for तस्मात् ). B1. 2. 5 Dc1 D4. 6 शेषम् ; B4 corrupt ( for रोषम् ). D1 अध्यागतं ; D4 अप्यामतं ( for °गतं ). M1. 2 च ( for त्वं ). — ( L. 225 ) B Dn2 D3 अंतः ; D5 आशां ; D7. 8 S उभौ ( for अतः ). B4. 5 D6 संहरस्वेति ; D4 °स्वेव ; D5 °न्नेव ; D7. 8 °स्वैव ; T G2-5 M3-5 संहर सर्व- ; G1 M1. 2 संहरेः सर्व- ( for संहरस्वेह ). D5 जीवं ; D7. 8 भीरु ( for जीवान् ). — Lines 226-248 = ( var. ) 250. 35-41. — ( L. 226 ) S सा चैवमुक्ता मृत्युसंज्ञापदेशात्. — ( L. 227 ) B4 च ( for तम् ). — ( L. 228 ) B4 तु ( for च ). B1 ( marg. as above ). 2. 5 Dn2 D1-4. 6 प्राणं ( for प्राणान् ). D7. 8 G2 प्रापणांते ; T G1. 3-5 M3-5 प्रायणांते ; M1. 2 प्राणयंते ( for अन्तकाले ). — ( L. 229 ) Dc1 ( before corr. ) संत्यज्य ( for त्यज्य ). Dn1 संहृत्य ( for हरति ). B1-3 D6 अशक्ता ; B5 Dn2 D3 अशक्त्या ( for असक्ता ). S कामक्रोधौ संहरत्येव हित्वा ( G2 मुक्ता ). — ( L. 230 ) D7. 8 त्वेवं ; T G2. 3 त्वेषां ( for तेषां ). B1 [आ]त्मप्रसूता ; B2. 3. 5 Dn1 सुप्रसूता ; B4 स्वप्रसूता ; Dn2 D1. 3. 5-8 संप्रसूता ; D4 च प्र° ; T G2-5 तत्र सूता ; G1 M1. 2 तं प्र° ( for तत्प्र° ). — ( L. 231 ) D5. 8 रोगौ ; T G2-5 रोगैर् ( for रोगो ). Dc1 Dn1 D7 T G3. 4 युज्यते ; D1. 5 रज्यते ( for रुज्यते ). D7. 8 S देहः ( for जन्तुः ). — D5 om. line 232. — ( L. 232 ) B2 D2 T G2-5 च ; Dn2 om. ( for वै ). B4 प्राणनाते ; Dn2 D4 M1. 2 प्राणयं( Dn2 °यां )ते ; D2 प्राणभीते ; D7. 8 प्राणकाले ( for प्रायणान्ते ). — After line 232, B D ins.:

तस्माच्छोकं मा कृथा निष्फलं त्वं
सर्वे देवाः प्राणिभिः प्रायणान्ते ।

[ D5 om. line 1. — ( L. 1 ) D4 त्वा ( for त्वं ). — ( L. 2 ) B1. 3 Dc1 Dn D1-4. 6. 7 प्राणिनां ( for प्राणिभिः ). B4 D1. 2. 7 प्रापणांते ; Dn1 प्रायणंते ; D4

भेत्ता देहान्प्राणिनां सर्वगोऽसौ । [ 235 ]
नैवावृत्तिं नानुवृत्तिं कदाचि-
त्प्राप्नोत्युग्रोऽनन्ततेजा विशिष्टः ।
सर्वे देवा मर्त्यसंज्ञा विशिष्टा-
स्तस्मात्पुत्रं मा शुचो राजसिंह ।
स्वर्गं प्राप्तो मोदते त्वत्तनूजो [ 240 ]
नित्यं रम्यान्वीरलोकानवाप्य ।
त्यक्त्वा दुःखं संगतः पुण्यकृद्भि-
रेषा मृत्युर्देवदिष्टा प्रजानाम् ।
प्राप्ते काले संहरित्री यथाव-
त्स्वयं कृता प्राणहरा प्रजानाम् । [ 245 ]
आत्मानं वै प्राणिनो घ्नन्ति सर्वे
नैनं मृत्युर्दण्डपाणिर्हिनस्ति ।
तस्मान्मृतान्नानुशोचन्ति धीरा-

---

प्राणपाते ; $D_6$ प्रापणात्ते ( for प्रायणान्ते ). $D_5$ ते च प्राणा-न्प्राणिनः प्रीणयंते. ]

— ( L. 233 ) B D ग( $D_2$ म )त्वा वृत्ताः ; $M_{1.2}$ प्राणान्हत्वा ; $M_5$ ( *inf. lin.* ) प्राणा गताः ( for प्राणा गत्वा ). — After line 233, B D ins. :

एवं सर्वे प्राणिनस्तत्र गत्वा
वृत्ता देवा मर्त्यवद्राजसिंह ।

[ ( L. 1 ) $B_2$ $Dn_2$ $D_2$ प्राणिनां ( for °नस् ). $Dn_2$ $D_2$ आशु गत्वा ; $D_4$ चाशु गत्वा ; $D_5$ तत्तु गत्वा ; $D_{7.8}$ संनिवृत्ता ( for तत्र गत्वा ). — ( L. 2 ) $D_4$ देवा ; $D_5$ भूत्वा ; $D_7$ गत्वा ; $D_8$ om. ( for वृत्ता ). $D_4$ दैत्या ( for देवा ). $D_5$ मर्त्यतां ( for °वद् ). $D_1$ राजसिंहः ; $D_5$ यांति भूयः ( for राजसिंह ). ]

— On the other hand, S ins. after line 233 :

एवं मृत्युः प्राणिनां तत्र गत्वा
भूत्वा देवी मर्त्यतां याति भूयः ।

[ ( L. 1 ) $G_2$ प्राणिनस् ( for °नां ). — ( L. 2 ) $G_5$ [ *sup. lin.* ] मृत्वा ( for भूत्वा ). T देवि ; $G_{1.2.5}$ M देवा ( for देवी ). $G_{1.5}$ M ( $M_5$ [ *inf. lin.* ] as above ) यांति ( for याति ). ]

— ( L. 234 ) $D_{7.8}$ भीष्म- ( for भीम- ). — ( L. 235 ) $D_{1.4}$ भित्त्वा ( for भेत्ता ). $B_3$ $Dc_1$ ( before corr. ) $Dn_1$ देहं ; $D_{7.8}$ देहे ( for देहान् ). $D_{1.4}$ प्राणिना ( $D_4$ °नः ) ( for °नां ). $D_{7.8}$ S देह( $G_5$ °हि )भूतः ( for सर्वगोऽसौ ). — $D_3$ om. lines 236–237. — ( L. 236 ) $D_{4.7.8}$ $G_{1.2}$ $M_{1.2}$ नैवावृ( $D_{7.8}$ °पा वृ )त्तिर् ; Bom. ed. नो वा वृत्तिं ( for नैवावृत्तिं ). B $Dc_1$ Dn $D_{1.2.6}$ नैव ( $D_2$ °प ) वृत्तिं ; $D_{4.7.8}$ नानुवृत्तिः ; $D_5$ नात्र वृत्तिः ; S नातिवृत्तिं ( $G_{1.2}$ $M_{1.2}$ °त्तिः ) ( for नानुवृत्तिं ). — ( L. 237 ) $Dn_1$ प्राप्तोत्यंतं ; $Dn_2$ $D_{7.8}$ $M_{3.4}$ प्राप्नोत्युग्रो ; $D_6$ प्राप्तो ह्युग्रो ( for प्राप्नोत्युग्रो ). $B_2$ ( marg. as above ).$_{4.5}$ $Dc_1$ $Dn_1$ $G_5$ $M_{3.4.5}$ ( *inf. lin.* as above ) [ ऽ ]नंततेजो ; $Dn_2$ नष्टतेजा ( for ऽनन्त° ). — ( L. 238 ) $B_4$ ***हा ( for सर्वे देवा ). $B_2$ मृत्यु- ( for मर्त्य- ). — After line 238, $D_{7.8}$ S ins. :

सर्वे मर्त्या देवसंज्ञा विशिष्टाः ।
[ $M_{3.5}$ मृत्युसंज्ञा ( for देव° ). ]

— ( L. 239 ) $G_4$ सर्व ( for पुत्रं ). T $G_2$ राजसिंहः. — ( L. 240 ) $D_1$ स्वर्गे ; $D_{7.8}$ स्वर्ग- ( for स्वर्गं ). $G_1$ $M_{1.2}$ प्राप्तौ. $B_2$ $Dc_1$ $Dn_2$ $D_{2-6}$ ते ( for त्वत् ). — ( L. 241 ) $D_7$ नित्यं रम्यां लोकवीरानवाप्य. — ( L. 242 ) $Dn_2$ $D_{3.5}$ सं( $Dn_2$ om. सं )गतं ; $D_4$ पुण्यजं ; $D_3$ स्वर्गतं ; $D_{7.8}$ संहृतं ( for संगतः ). — ( L. 243 ) $Dn_2$ S एवं ( for एषा ). $Dn_2$ $D_{1.3.6}$ दैव- ( for देव- ). $D_{4.6}$ -दृष्टा ; $D_{5.7.8}$ S -सृष्टा ( for -दिष्टा ). — ( L. 244 ) $D_{7.8}$ काले प्राप्ते ( by transp. ). $B_{1.3}$ $D_{3.4.6}$ संहरंती ; $B_5$ °रंति ; $D_{7.8}$ °रते ( for °रित्री ). S काले प्राप्ते संहरत्येव जंतून्. — After line 244, $D_{7.8}$ S ins. :

रोगा ह्येते व्याधयो देहजाश्च ।

[ $D_{7.8}$ चैषां ( for ह्येते ). $D_{7.8}$ देहयाताः ; $G_2$ देवजाश्च ( for देह° ). ]

— ( L. 245 ) $Dn_2$ कृत्वा ( for कृता ). $D_{7.8}$ S स्वयं कृताः प्राणह( $D_{7.8}$ °हा )राः प्रजानां. — ( L. 246 ) $D_6$ ( before corr. ) क्रोधादयः ; $D_6$ ( by corr. ) क्रोधारयः ( for आत्मानं वै ). $Dn_2$ $D_3$ प्राणिनां ; S ( except $G_2$ ) देहिनो ( for प्राणिनो ). — ( L. 247 ) $B_2$ नैव ; $B_5$ S नैतान् ( for नैनं ). $D_{7.8}$ निहंति ( for हिनस्ति ). — ( L. 248 ) $D_4$ सुतान् ; $D_{7.8}$ मृत्युं ; $G_1$ $M_{1.2}$ वृत्तान् ( for मृतान् ). — ( L. 249 ) $B_{1.2}$ $Dc_1$ Dn $D_{3-6}$ सत्त्वं ; $B_{3.5}$ $Dc_1$ ( marg. *sec. m.* ) $D_2$ मृत्युं ; $B_4$ $D_1$ सत्यं ; $D_{7.8}$ सर्वं ; T तं ( for तत्त्वं ). $D_4$ धर्मसृष्टं ; $D_7$ दैव° ; $D_3$ देव° ( for ब्रह्म° ). — After line 249, $Dn_2$ $D_{2.4.6}$ ins. :

इत्थं सृष्टिं देवकॢप्तां विदित्वा
पुत्रान्नष्टाञ्शोकमाशु त्यजस्व ।

[ $D_{4.6}$ om. line 1. — ( L. 1 ) $Dn_2$ दैवकॢप्तां ( for देव° ). — ( L. 2 ) $D_4$ त्यज त्वं ( for त्यजस्व ). ]

स्तत्त्वं ज्ञात्वा निश्चयं ब्रह्मसृष्टम् ।

व्यास उवाच ।

एतच्छ्रुत्वार्थवद्वाक्यं नारदेन प्रकाशितम् । [ 250 ]

उवाचाकम्पनो राजा सखायं नारदं तदा ।

व्यपेतशोकः प्रीतोऽस्मि भगवन्नृषिसत्तम ।

श्रुत्वेतिहासं त्वत्तोऽद्य कृतार्थोऽस्म्यभिवादये ।

तथोक्तो नारदस्तेन राज्ञा ऋषिवरोत्तमः ।

जगाम नन्दनं शीघ्रं देवर्षिरमितात्मवान् । [ 255 ]

पुण्यं यशस्यं स्वर्ग्यं च धन्यमायुष्यमेव च ।

अस्येतिहासस्य सदा श्रवणं श्रावणं तथा ।

एतदर्थपदं श्रुत्वा विज्ञाय त्वं च पाण्डव ।

क्षत्रधर्मं च विज्ञाय शूराणां च परां गतिम् ।

संप्राप्तोऽसौ महावीर्यः स्वर्गलोकं महारथः । [ 260 ]

अभिमन्युः परान्हत्वा प्रमुखे सर्वधन्विनाम् ।

युध्यमानो महेष्वासो हतः सोऽभिमुखो रणे ।

असिना गदया शक्त्या धनुषा च महारथः ।

तस्मात्परां धृतिं कृत्वा भ्रातृभिः सह पाण्डव ।

अप्रमत्तः सुसंनद्धः शीघ्रं योद्धुमुपाक्रम । [ 265 ]

Colophon.

संजय उवाच ।

श्रुत्वा मृत्युसमुत्पत्तिं कर्माण्यनुपमानि च ।

धर्मराजः पुनर्वाक्यं प्रसाद्यैनमथाब्रवीत् ।

गुरवः पुण्यकर्माणः शक्रप्रतिमविक्रमाः ।

---

B1–3.5 Dc1 Dn1 D7 द्वैपायन उवाच; D1 नाकैपायन (sic) उवाच; D8 वैशं° (for व्यास उवाच). — (L. 250) B1 आत्मवद्; D2 अर्थविद् (for °वद्). D7.8 S प्रभाषितं (for प्रकाशितम्). — (L. 251) T सहायान्; G2 सभायां; G5 सहायं (for सखायं). B2.5 Dn2 D1–6.8 G2.5 तथा (for तदा). — (L. 252) B4 मुनि- (for ऋषि-). — (L 253) B1–3 Dc1 Dn1 च; B4.5 Dn2 D1–6 तु; G4 [ऽ]पि (for ऽद्य). D7.8 कृतकृत्योभवं त्वहं (for the post. half). — Before line 254, Dn1 D7 ins. द्वैपायन उवाच. — (L. 254) D4.7.8 राज(D4 ऋषि)वरोत्तम; S देवर्षिसत्तमः (for ऋषिवरो°). — (L. 255) B3 मंदरं; Dn1 D7.8 [अ]नंतरं (for नन्दनं). M3–5 पुण्यम् (for शीघ्रं). Dn1 D7.8 देवर्षिरपि नारदः; S अशोकवनमात्मनः (for the post. half). — Before line 256, B4 ins. व्यास उवाच. — (L. 256) S आयुष्यं (for स्वर्ग्यं च). S स्वर्गीयं धन्य(G4.6 °र्म्यं)मेव च (for the post. half). — (L. 257) G1 (*inf. lin.* as above) M1.2 यदा; G2 कथा; G5 M4 तदा (for सदा). Dn1 D7.8 अध्येति यः सदा राजन्; Dn2 D3.5.6 अस्येतिहासश्रेष्ठस्य (for the prior half). G1.6 श्रावयेत्; M1.2 °यत् (for °णं). G6 तदा; M1.2 ततः (for तथा). — (L. 258) Dn1 D7.8 एत(D8 °न)मर्थं परं श्रुत्वा; S एव(G1 M3–5 °त)मर्थं हि संश्रुत्य (for the prior half). B2 (marg.) स्यास्था तर (sic); T G2–6 ज्ञात्वा चैव; M3–5 विज्ञायैव (for °य त्वं). D7 M4 च पांडवः; T G2.3 स पांडव (G2 °वः); G4.5 हि पांडव (for च पां°). B Dc1 Dn2 D1–6 तदा राजा (B4 सुस्थो भव) युधिष्ठिरः (B4 °र); G1 M1.2 विज्ञात्वा चैव पांडव (for the post. half). — (L. 259) D7.8 कृत्स्नध(D8 °त्स्नं ध)र्मं च; G5 (*sup. lin.*) क्षत्रधर्मं हि; G6 (orig.) क्षत्रं चैव हि (for क्षत्रधर्मं च). D4 परागतिं.

— (L. 260) T G1.3.4 M संप्राप्नोति; G2.5 °प्नोति- (for संप्राप्तोऽसौ). D4 **वीर्यः; D7.8 G2 महावीरः (for °वीर्यः). B5 सुदुर्गमं (for महारथः). — (L. 261) B5 -धर्मिणां; D2.6 -धन्विनं (for -धन्विनाम्). — (L. 262) D4 **ष्वासो; G3.5 महेष्वासास् (G5 °सांस्) (for °ष्वासो). Dc1 Dn1 D7.8 हतो हि; T G3 M3–5 त्यक्तात्मा; G1.3.4 M1.2 त्यक्त्वात्मा; G5 त्यक्त्वा हि (for हतः सो). — After line 263, B D ins.:

विरजाः सोमसूनुः स पुनस्तत्र प्रलीयते ।

[ B2 (marg.) अभिमन्युः; B4 **पुत्रश्; Dn1 D7.8 सोमपुत्रस् (for °सूनुः). B3.4 Dc1 च; Dn1 D7.8 तु (for स). Dn1 व्यलीयत; D7 °लयत् (for प्रलीयते). B1 स पुनस्तत्र लीयते (for the post. half). ]

— (L. 265) Dn1 तु संवृत्तः; D7.8 सुसंयत्तः; T G2–4 °क्रुद्धो; G1.5 M °रब्धः (for °नद्धः). Dc1 क्षिप्रं (for शीघ्रं). B5 D3.4 उपाक्रमत्; Dn2 D1 °क्रमः; D5 उपक्रमे; D6 उपाक्रमात् (for °क्रम). Dn1 D7.8 शीघ्रं युद्धमुपक्रम; S राजन्युध्यस्व शत्रुभिः (for the post half). — Colophon: — *Sub-parvan*: B1 D1 अभिमन्युवध. — *Adhy. name*: B1.3.5 Dn1 मृत्यूपाख्यानं; B2.3 (also) Dc1 Dn2 D1.2 मृत्युप्रजापतिसंवादः; B4 प्रजापतिमृत्युसंवादः; D3.5–8 मृत्यु-संवादः; D4 युधिष्ठिरविषादः; G2 व्यासयुधिष्ठिरसमागमः. — *Adhy. no.*: B1.2 Dn1 D8 G2.5 52; Dc1 58; D2 48; T G1.3.4 M 51. — *Śloka no.*: Dn1 58. — B3 reads line 266 twice. — (L. 266) D3.6 S मृत्योः (for मृत्यु-). — (L. 267) S (except G2) व्यासं (for वाक्यं). Dn1 D7.8 S [उ]त्तरम्; D3 तमथ (for [ए]नमथ). — Before line 268, B Dc1 Dn2 D1–6.8 G1.3 M3–5 ins. युधिष्ठिर उवाच. — (L. 268) Dn1

पूर्वराजर्षयो ब्रह्मन्कियन्तो मृत्युना हताः ।
भूय एव तु मां तथ्यैर्वचोभिरभिबृंहय । [ 270 ]
राजर्षीणां पुराणानां समाश्वासय कर्मभिः ।
कियन्तो दक्षिणा दत्ताः कैश्च दत्ता महात्मभिः ।
राजर्षिभिः पुण्यकृद्भिस्तद्भवान्प्रब्रवीतु मे ।
व्यास उवाच ।
श्वित्यस्य नृपतेः पुत्रः सृञ्जयो नाम भूमिपः ।
सखायौ तस्य चैवोभौ ऋषी नारदपर्वतौ । [ 275 ]
तौ कदाचिद्गृहं तस्य प्रविष्टौ तद्दिदृक्षया ।
विधिवच्चार्चितौ तेन प्रीतौ तत्रोषतुः सुखम् ।
तं कदाचित्सुखासीनं ताभ्यां सह शुचिस्मिता ।
दुहिताभ्यागमत्कन्या सृञ्जयं वरवर्णिनी ।
नारद उवाच ।
कस्येयं चपलापाङ्गी सर्वलक्षणसंमता । [ 280 ]

---

सुमुख्याः ; D7.8 सुराख्याः ; T G2-5 सुरवः ; G1 M सुरूपाः ( for गुरवः ). — ( L. 269 ) B D स्माने ; T G2-5 पूर्वं ( for पूर्व- ). D4-6 राजन् ( for ब्रह्मन् ). D7.8 अयत्वान् ( sic ) ( for कियन्तो ). B Dc1 D1-3 अनघाः सत्यवादिनः ( for the post. half ). — ( L. 270 ) D2 तथ्यैर्मां ( by transp. ) ; S ( except G2.5 ) मा तथ्यैर्. B3 T G2-5 उपबृंहय ; Dc1 सम° ; Dn1 D7.8 अभिवर्धय ; D1 परिबृंहय ; D6 अनु° ( for अभि° ). — ( L. 271 ) D1 om. ( hapl. ) from. णां पुराणानां up to राजर्षि ( in line 273 ). — Dn2 G5 om. line 272. — ( L. 272 ) B2.3 Dc1 Dn1 D2.6.8 G2 कियंतो ; D4.5.7 G4 कियंतो ( for कियन्तो ). D3.5.6 कैश्चिद् ; S ( G5 om. ) काश्च ( for कैश्च ). D7 वद ( for दत्ता ). — ( L. 273 ) T G1.3.4 M1.2 राजभिः पुण्यकृद्भिस्तु ( for the prior half ). Dn2 प्रब्रवीमि ; D1 °वीहि ( for °वीतु ). Dn1 D7.8 मां ; Dn2 ते ( for मे ). — After line 273, S ins.:

व्यास उवाच ।
अन्येऽपि यज्वनां लोका अन्ये चापि तपस्विनाम् ।
क्षमावतां च त्रींल्लोकाञ्शूरा गच्छन्ति भारत ।
क्षत्रियस्य तु संग्रामे शत्रून्हत्वा हतस्य वा ।
फलमत्यन्तमित्याहुर्धर्मशास्त्रविदो जनाः ।
वेदविद्याव्रतस्नाता यज्वानः पुत्रिणश्च ये । [ 5 ]
तेभ्यः परार्ध्या यज्वानो यज्वभ्यश्च तनुत्यजः ।
स वीरो यज्वनो नित्यं क्षत्रियानार्जुनिर्गतः ।
लोकान्पुण्यतमानिष्टानिति विद्धि विशां पते ।
सर्वेषां नृपसिंहानां शृणु यज्ञान्नृपोत्तम ।
ताननतिक्रम्य गच्छन्ति स्वर्गकामास्तनुत्यजः । [ 10 ]
युधिष्ठिर उवाच ।
सर्वेषां यज्वनां यज्ञं श्रोतुमिच्छामि सुव्रत ।
दक्षिणाश्चानुरूपेभ्यो दत्ता राजर्षिसत्तमैः ।

[ ( L. 1 ) G1 M यज्विनां ( for यज्वनां ). G2 [ऽ]पि च ( by transp. ). — ( L. 2 ) G1 M3-5 चाति- ; M1.2 चापि ( for च त्रींल् ). — ( L. 4 ) M3.4.5 ( *sup. lin.* ) -विशारदाः ( for -विदो जनाः ). — ( L. 5 ) G2 क्षत्रियाश्च ( for पुत्रिणश्च ). — ( L. 6 ) G1 M परार्ध्यां ; G2 °र्ध्यां ( for °र्ध्या ). G1 M3-5 यज्विभ्यश्च ; M1.2 यज्विन्यश्च ( for यज्वभ्यश्च ). — ( L. 7 ) M3-5 स वीरो यज्विनोतीत्य ( for the prior half ). T G2 क्षत्रियाद् ( for °यान् ). G2 M1 अर्जुनिर् ( sic ). — ( L. 9 ) G1-4 M नृपर्षीणां ( for °सिंहानां ). — ( L. 10 ) G1.2 M यान् ( for तान् ). G2 स्वर्गमेष्टं ; G3.4 °मिच्छंस् ; M3-5 °मार्गं ( for °कामास् ). — G2 om. the ref. — ( L. 11 ) G1 M सर्वेषां यज्विनां यज्ञान् ( for the prior half ). — ( L. 12 ) M1.2 दक्षिणान् ( for °णाश्च ). M1.2 अपि ; M3-5 अभि- ( for अनु- ). G1 M1.2 प्राप्ता ( for दत्ता ). ]

— ( L. 274 ) B1 ( before corr. ).3 ( marg. ) श्वेतस्य ; Dc1 D3 श्वैत्यस्य ; Dn1 D3-6 शैब्यस्य ; Dn2 सैब्यस्य ; D1.2 स्वित्यस्य ; D7 T G2-5 चैत्यस्य ; M3-5 श्वैत्यस्य ( for श्वित्यस्य ). D8 संजयो. B Dc1 Dn2 D1.3-6 नामतः ( for भूमिपः ). D2 संजयो नामतः पुरा ( for the post. half ). — ( L. 275 ) B2 ( marg. ) चैवैताव् ; Dn1 D7.8 चास्तां द्वौ ; D2 वै चोभौ ; S चाभूताम् ( for चैवोभौ ). B2.3 D ( except Dn1 D6.7 ) ऋषी पर्वतनारदौ ( for the post. half ). — ( L. 276 ) G1 M1.2 यद् ( for तद् ). — ( L. 277 ) D5 चार्थितौ ; M1.2 सार्चितौ ( for चार्चितौ ). Dn1 D7.8 प्रीतौ नारदपर्वतौ ( for the post. half ). — ( L. 279 ) Dn1 D7 चागमत् ; M3-5 [अ]त्यग° ( for [अ]भ्यग° ). Dn1 तस्य ; D7.8 तत्र ( for कन्या ). Dn1 D2 संजयं ; M5 ( *sup. lin.* ) पितरं ( for सृञ्जयं ). Dn1 D7.8 सृं( Dn1 सं )-जयं वाक्यमब्रवीत् ; T °यं वर्णिनी तदा ( for the post. half ). — After line 279, B D ins.:

तयाभिवादितः कन्यामभ्यनन्दद्यथाविधि ।
तत्सलिङ्गाभिराशीर्भिरिष्टाभिरभितः स्थिताम् ।
तां निरीक्ष्याब्रवीद्वाक्यं पर्वतः प्रहसन्निव ।

[ ( L. 1 ) Dn2 [अ]भिवादितौ ; D7.8 चावादितः ( for [अ]भिवा° ). Dn1 D5 तथाभिवादिनीं कन्याम् ( for the prior half ). Dn2 अभिनंद्य ( for अभ्यनन्दद् ). — ( L. 2 ) D7.8 सालिंगाभिर्. Dc1 Dn1 D1.5.6 आशीभिर् ( for आशीर्भिर् ). Dn1 D7.8 अभिनंद्य च ; Dn2 D3 अभितः स्थिता

उताहो भास्विदर्कस्य ज्वलनस्य शिखा त्वियम् ।
ह्रीः श्रीः कीर्तिर्धृतिः पुष्टिः सिद्धिश्चन्द्रमसः प्रभा ।
व्यास उवाच ।
एवं ब्रुवाणं देवर्षिं नृपतिः सृञ्जयोऽब्रवीत् ।
ममेयं भगवन्कन्या मत्तो वरमभीप्सति ।
नारदस्त्वब्रवीदेनं देहि मह्यमिमां नृप । [ 285 ]
भार्यार्थे सुमहच्छ्रेयः प्राप्तुं चेदिच्छसेऽनघ ।
ददानीत्येव संहृष्टः सृञ्जयः प्राह नारदम् ।
पर्वतस्तु सुसंक्रुद्धो नारदं वाक्यमब्रवीत् ।
हृदयेन मया पूर्वं वृतां वै वृतवानसि ।
यस्माद्वृता त्वया विप्र मा गाः स्वर्गं यथेच्छया । [ 290 ]
एवमुक्तो नारदस्तं प्रत्युवाचोत्तरं वचः ।
मनोवाग्बुद्धिसंभाषाः सत्यं तोयमथाग्नयः ।
पाणिग्रहणमन्त्राश्च प्रथितं वरलक्षणम् ।
न त्वेषा निश्चिता निष्ठा निष्ठा सप्तपदी स्मृता ।
अनुत्पन्ने च कार्यार्थे मां त्वं व्याहृतवानसि । [ 295 ]
तस्मात्त्वमपि न स्वर्गं गमिष्यसि मया विना ।
अन्योन्यमेवं शप्त्वा वै तस्थतुस्तत्र तौ तदा ।

---

(for °तः स्त्रिताम्). — (L. 3) D6 स (for प्र-).]

— B D om. the ref. — (L. 280) Dc1 M6 कन्येयं (for कस्येयं). B Dc1 Dn D1-3. 5-8 चंचलापांगी; T G2-4 त्वायतापांगी (G2 °गा); G1. 5 M चायतापांगी (for चपलापाङ्गी). S -संपदा (for -संमता). — (L. 281) S उथा स्विद् (for उताहो). B D2 भाः स्विद्; Dn1 नो स्युर्; Dn2 D4 वा स्विद्; D6 वार्चिर्; D8 चार्चिर्; G4 का स्विद् (for भास्विद्). D1 त्विषा; D5 प्रभा (for शिखा). Dn1 D7. 8 [अ]पि वा; G1 M1. 2 स्वयं; M3. 4 त्विव; M6 त्विह (for त्वियम्). — (L. 282) B (except B3) Dc1 D1. 2 श्रीर्ह्रीः (by transp.). G1 M1. 2 कृतिर्; M3 om. (for कीर्तिर्). Dn1 D7. 8 S सिद्धिस्तुष्टिश् (for पुष्टिः सिद्धिश्). MSS. om. the ref. — (L. 283) D4 (before corr. as above) देवर्षिर् (for °र्षिं). Dn1 D2. 6 संजयो (for सृं°). — (L. 284) S वत्सा (for कन्या). D7. 8 वर्यं; S वर्या (for मत्तो). Dn1 D7. 8 इहेप्सति; Dn2 D5. 6 G1 M अभीप्सती (for °प्सति). — (L. 285) Dn2 D3. 5. 6 M1. 2 एनां (for एनं). D5 सत्यं (for मह्यम्). Dn2 D3-6 सुतां (for इमां). T G2-4 इति (for नृप). — D3. 6 om. line 286. — (L. 286) T G M3-6 भार्यार्थे; M1. 2 °र्थी (for °र्थे). T G3. 4 त्वं (for सु-). G2 तेजः (for श्रेयः). D4 भार्यार्थं समनुश्रेयः (for the prior half). Dn2 प्राप्तं. B1-4 Dc1 Dn2 D1. 2. 5 G2 नृप; B2 (marg.). 5 प्रभो; D4 पदं (for ऽनघ). — (L. 287) Dn1 D2. 4. 5. 7. 8 ददामि (for °नि). T G1. 3. 4 M सुप्रीतः (for संहृष्टः). G5 ददामीत्यब्रवीत्प्रीतः (for the prior half). Dc1 (before corr.) Dn1 D1. 2. 7 संजयः; S प्रांजलिः (for सृञ्जयः). — After line 287, S ins.:

व्यास उवाच ।
एवमुक्ते नृपतिना क्रोधपर्याकुलेक्षणः ।

— (L. 288) Dn1 D7. 8 च (for तु). D4 om. सु. — (L. 289) Dn1 D7. 8 पूर्वं मम हितं विंदन् (D7. 8 विध्यन्) (for the prior half). Dn1 D7. 8 भार्या न (for वृतां वै). — (L. 290) D4 तस्माद् (for य°). D4 मया. D5 पूर्वं (for विप्र). Dn1 D7. 8 यस्मात्त्व विवृता पूर्वं (for the prior half). B2 Dn2 D1-3. 5 यथेप्सया (for यथेच्छया). Dn1 D7. 8 तस्मात्स्वर्गं न (Dn1 °त्संगान्न) यास्यसि (D8 °ति) (for the post. half). — For lines 289-290, S subst.:

पूर्वं ममेमां मनसा विद्धि भार्यां वृताम्नृपे ।
तस्मादवोचस्त्वं तस्मात्स्वर्गमार्गं न गच्छसि ।

[(L. 1) T1 मयैव; G1 M1. 2 मयेयं; M3-5 मयेमां (for ममेमां). — (L. 2) G1 M तस्मादवाचरस्तस्मात् (for the prior half).]

— (L. 291) Dn1 D7. 8 त्वसौ राजन् (for नारदस्तं). — (L. 292) Dn1 D7. 8 -संभाषात् (D7 °न्); D2 -संदत्ताः; G2 -संभाव्याः; M1. 2 -संभाष्यं (for °षाः). B Dc1 Dn2 D1-6 दत्ता चोदकपूर्वकं; Dn1 D7. 8 सत्यं नोपम- (Dn1 नापि म)या कृतं (for the post. half). — Lines 293-294 = (var.) Manu. 8. 227. — (L. 293) Dn2 D5. 6 -मंत्रश्. Dn1 प्रापितं (for प्रथितं). B1 Dn1 D7. 8 S दार- (for वर-). — (L. 294) B1 D6 G5 न त्वेषां; Dc1 D7. 8 नन्वेषा; T G2-4 न तेषां (for न त्वेषा). Dc1 निष्ठिता (for निश्चिता). Dn1 सा च (for निष्ठा). B4 सप्तपदे; D4 G1 M साप्तपदी. D2 सतां; D5 सताः (for स्मृता). T G3-5 त्वया सा मनसा स्मृता (for the post. half). — (L. 295) Dc1 D5 अनुत्पन्नेव. B1. 2 (marg.). 3 Dc1 भार्यार्थे; B2 निष्ठार्थे; Dn2 कार्यार्थो (for °र्थे). Dn1 D7. 8 S एवं विद्वांस्तु (Dn1 D7. 8 °द्वान्स) मां (T G3. 4 M1-3. 5 मा) यस्माद् (for the prior half). D5 मत्तो; D6 मा त्वं; S अनु (for मां त्वं). Dn1 D7. 8 अज्ञानाच्छप्तवानसि (for the post. half). — (L. 296) Dn1 D7. 8 विना मया (by transp.). — (L. 297) B1 अन्योक्तम् (for °न्यम्). B1 एव (for एवं). B1. 3. 5 Dc1 (marg. as above) Dn1 D7. 8 G1 M

भृगो रामाभिधावेति यदाक्रन्दन्द्विजोत्तमाः ।

ततः काश्मीरदरदान्कुन्तिक्षुद्रकमालवान् । [ 845 ]

अङ्गवङ्गकलिङ्गांश्च विदेहांस्ताम्रलिप्तकान् ।

रक्षोवाहान्वीतिहोत्रांस्त्रिगर्तान्मार्तिकावतान् ।

शिबीनन्यांश्च राजन्यान्देशे देशे सहस्रशः ।

निजघान शितैर्बाणैर्जामदग्न्यः प्रतापवान् ।

कोटीशतसहस्राणि क्षत्रियाणां सहस्रशः । [ 850 ]

इन्द्रगोपकवर्णस्य बन्धुजीवनिभस्य च ।

रुधिरस्य परीवाहैः पूरयित्वा सरांसि च ।

सर्वानष्टादश द्वीपान्वशमानीय भार्गवः ।

ईजे क्रतुशतैः पुण्यैः समाप्तवरदक्षिणैः ।

वेदीमष्टनवोत्सेधां सौवर्णां विधिनिर्मिताम् । [ 855 ]

सर्वरत्नशतैः पूर्णां पताकाशतमालिनीम् ।

ग्राम्यारण्यैः पशुगणैः संपूर्णां च महीमिमाम् ।

रामस्य जामदग्न्यस्य प्रतिजग्राह कश्यपः ।

ततः शतसहस्राणि द्विपेन्द्रान्हेमभूषणान् ।

निर्दस्युं पृथिवीं कृत्वा शिष्टेष्टजनसंकुलाम् । [ 860 ]

कश्यपाय ददौ रामो हयमेधे महामखे ।

त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।

इष्ट्वा क्रतुशतैर्वीरो ब्राह्मणेभ्यो ह्यमन्यत ।

---

मुदीरिता; D7.8 मात्रा भृशमुदीरितां ( for the post. half ). — ( L. 844 ) B4 भृगौ; S भृशं ( for भृगो ). T G3.4 रामो ( for राम ). B1 ( marg. ) Dn D4.6 अभिधानेति ( for अभिधावेति ). T यदाक्रंदद् ( for °दन् ). Dn1 D7.8 द्विजोत्तमं. — ( L. 845 ) G1 M1.2 तदा ( for ततः ). D1 कश्मीर-. D4 कुंत-; D5.6 कुंतीन् ( for कुन्ति- ). D1 -छत्रक- ( for -क्षुद्रक- ). S ( except G5 ) -मालवान्. — ( L. 846 ) Dn1 S -कलिंगेंद्रान् ( for -कलिङ्गांश्च ). D7.8 अंगवं( D8 °गा वं )गाः कलिंगेंद्रो ( D8 °द्रा ) ( for the prior half ). B1 चाम-; D1 G1 M1.2.5 ताम-; M3.4.5 ( *sup. lin.* ) तान- ( for ताम्र- ). D7.8 विदेहास्तोमलिप्तकाः ( for the post. half ). — ( L. 847 ) Dn1 रक्षोद्वाहान्; Dn2 D4.5 राजावहान्; S कुंभाव( G2 °प )हान् ( for रक्षोवा° ). D7.8 शत्रु( D8 °त्र्यु )द्वहानीतिहोत्रास् ( D8 °त्रां ) ( for the prior half ). D8 आर्तिकावतान्; G5 मार्तगाचरान् ( for मार्तिकावतान् ). D7.8 त्रिगर्तामार्तिवतानपि ( hypermetric ) ( for the post. half ). — D2 om. line 848. D8 om. lines 848–849. — ( L. 848 ) Dn1 अन्याश्. Dn2 D3–6 तु ( for च ). T G1-4 M राजेंद्रान्; G5 राजेंद्र ( for राजन्यान् ). B Dc1 Dn2 D1.3.4.6 देशान्देशान्; D5 देशाद्देशात् ( for देशे देशे ). — ( L. 850 ) B2 कोटीः; Dn1 D1.7.8 कोटि- ( for कोटी- ). D4 -सहस्रांशः ( for °स्राणि ). D4 om. the post. half. S [अ]थावधीत् ( for सहस्रशः ). — ( L. 851 ) D4.5 इंद्रगोपसवर्णस्य ( for the prior half ). T -निसृज्य ( for -निभस्य ). — ( L. 852 ) B1–4 Dc1 D5 G2 परीवापान्; D7.8 परीवाप्यः; T G3–5 °वाहान्; G1 M परिप्लावैः ( for परीवाहैः ). D4 परिवाहैः पूरयित्वा सर्वाण्येव सरांसि च. — ( L. 854 ) D5 इष्टैः ( for ईजे ). — D2 om. lines 855–857. — ( L. 855 ) G3.4 वेदिम् ( for वेदीम् ). B Dc1 Dn1 D1.3.6.7 अष्टनलोत्सेधां; D4 अष्टमलो°; D8 G1 M ( M5 *sup. lin.* ) अष्ट( D8 °ष्टा )तलो°; T G2–4 M5 अष्टादशो°; G5 ऋष्टतलो° ( for अष्टनवो° ). B5 Dc1 D3 सौवर्णीं; D7.8 सौवर्ण- ( for °र्णां ). — D4 om. line 856. D1 reads line 856 twice. — ( L. 856 ) D5.6 सर्वे ( for सर्व- ). Dn1 G2 -रत्नमयैः; D7.8 °चयैः ( for °शतैः ). Dn1 D7.8 S ( except G5 ) -ध्वजमालिनीं ( for -शत° ). — ( L. 857 ) Dn1 D5.8 ग्रामारण्यैः ( for ग्राम्या° ). T G2–4 च पशुभिः ( for पशुगणैः ). — D2 transp. lines 857 and 858. B ( except B4 ) Dc1 D1.3–7 S repeat ( without var. ) line 858 after line 859. — ( L. 858 ) D2 रामः श्रीमाञ्जामदग्न्यः ( for the prior half ). B2 D S काश्यपः ( for क° ). — B2 D3 om. line 859. — ( L. 859 ) Dn1 D7 S शतं ( for ततः ). G4 शतं ( for शत- ). B4.5 गजेंद्रान्; G2 द्विपानां; G4 द्विजेंद्रान् ( for द्विपेन्द्रान् ). B4.5 S ( G2 corrupt ) -भूषितान्; D1 -मालिनः ( for -भूषणान् ). — ( L. 860 ) G5 निर्दग्धां ( for निर्दस्युं ). Dn1 विशिष्ट- ( for शिष्टेष्ट- ). T G3.4 -वत्सलः; G1 M वत्सलां; G5 -वत्सलान् ( for -संकुलाम् ). D8 कृत्वा शिष्टजनाकुलां ( for the post. half ). — ( L. 861 ) B2 D1.2 S काश्यपाय ( for कश्य° ). D5 मुमोच ह ( for हयमेधे ). — ( L. 862 ) B5 Dn1 D1.4–8 त्रि- ( for त्रिः- ). B5 Dn2 D1–6 -वारान् ( for -कृत्वः ). Dn1 D7.8 इमां; D2 पुरा ( for प्रभुः ). D5 कृत्वा निःक्षत्रियान्विभुः; S येन निःक्षत्रिया कृता ( for the post. half ). — ( L. 863 ) D7.8 यज्ञशतैर् ( for क्रतु° ). S तैस्तैर् ( for वीरो ). S त्वमंह( G4.5 °स )त ( for ह्यमन्यत ). — After line 863, B D Bom. ed. ins.:

सप्तद्वीपां वसुमतीं मारीचोऽगृह्णत द्विजः ।

रामं प्रोवाच निर्गच्छ वसुधातो ममाज्ञया ।

— ( L. 864 ) D1 S काश्यपस्य ( for क° ). S उत्सार्य ( for प्रो° ). — After line 864, Dn1 D7.8 ins.:

कुङ्कुणेषु नरश्रेष्ठो महेन्द्रे पर्वतेऽवसत् ।

[ Dn1 द्विजश्रेष्ठो ( for नरश्रेष्ठो ). D7 कुंकुणेषु स * श्रेष्ठो ( for the prior half ). D8 [ऽ]विशत् ( for ऽवसत् ). ]

स कश्यपस्य वचनात्प्रोत्सार्य सरितां पतिम् ।
इषुपाते युधां श्रेष्ठः कुर्वन्ब्राह्मणशासनम् । [ 865 ]
अध्यावसद्गिरिश्रेष्ठं महेन्द्रं पर्वतोत्तमम् ।
एवं गुणशतैर्जुष्टो भृगूणां कीर्तिवर्धनः ।
जामदग्न्योऽप्यतियशा मरिष्यति महाद्युतिः ।
त्वया चतुर्भद्रतरः पुत्रात्पुण्यतरस्तव ।
अयज्वानमदाक्षिण्यं मा पुत्रमनुतप्यथाः । [ 870 ]
एते चतुर्भद्रतरास्त्वया भद्रशताधिकाः ।
मृता नरवरश्रेष्ठा मरिष्यन्ति च सृञ्जय ।

Colophon.

व्यास उवाच ।

पुण्यमाख्यानमायुष्यं श्रुत्वा षोडशराजकम् ।
अव्याहरन्नरपतिस्तूष्णीमासीत्स सृञ्जयः ।
तमब्रवीत्तथासीनं नारदो भगवानृषिः । [ 875 ]
श्रुतं कीर्तयतो मह्यं गृहीतं ते महाद्युते ।
आहो स्विदन्ततो नष्टं श्राद्धं शूद्रापताविव ।
स एवमुक्तः प्रत्याह प्राञ्जलिः सृञ्जयस्तदा ।
पुत्रशोकापहं श्रुत्वा धन्यमाख्यानमुत्तमम् ।
राजर्षीणां पुराणानां यज्वनां दक्षिणावताम् । [ 880 ]
विस्मयेन हते शोके तमसीवार्कतेजसा ।

---

— ( L. 865 ) Dn1 D7.8 ब्रह्मण्यो ब्राह्मणश्रेष्ठः ; S इषुणेषुमतां श्रेष्ठो ( for the prior half ). — After the prior half of line 865, S ins. :

महेन्द्रं गिरिमाविशत् ।
ब्राह्मणो ब्राह्मणश्रेष्ठः.

[ ( L. 1 ) G1 M1.2 महेंद्र- ( for महेन्द्रं ). M3-5 आवसन् ( for आविशत् ). ]

—( L. 866 ) Dn1 D7.8 गिरिश्रेष्ठे ( for °श्रेष्ठं ). Dn1 D7.8 महेंद्रं मारुतोपमः ; S °द्रमकुतोभयः ( M4 °यं ) ( for the post. half ). — ( L. 867 ) B4 D2 S युक्तो ; Dn1 D7.8 श्रेष्ठो ; Dn2 तुष्टो ( for जुष्टो ). —( L. 868 ) G2 partly damaged. B2-5 D2 M4 द्युतियशा ; Dn1 D7 द्युतितया ; D8 द्युतितपा ( for ऽप्यतियशा ). Dn2 पतिष्यति ( for मरिष्यति ). B1 महामतिः ( for °द्युतिः ). T G1.3.4 M अवितृ( M1.2 °पि त )प्तो मरिष्यति ; G5 चतुर्भद्रतरस्त्वया ( for the post. half ). — After line 868, M5 ins. :

स चेन्मरिष्यति सृञ्जय चतुर्भद्रतरस्त्वया ।

— ( L. 869 ) T G2-4 पुण्यतमस् ( for °तरस् ). D8 G4 त्वया ( for तव ). G5 M5 पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः. — ( L. 870 ) T G2-5 M1-4 अदक्षिण्यं ( for अदा° ). D4 अभि शैब्येति व्याहरन् ; G1.5 M3-5 अधि श्वैत्येत्युदाहरत् ( for the post. half ). — G5 M3-5 om. lines 871-872. — ( L. 871 ) Dn1 D7.8 तथा ( for त्वया ). T G2-4 तव ( G2 त्वया ) पुत्राधिकास्तथा ; G1 M1.2 त्वया भद्रायुताधिकाः ( for the post. half ). — ( L. 872 ) B1-3.5 Dn2 D1-8 -वरश्रेष्ठ ( for -वरश्रेष्ठा ). B4 मृता नृपा नरश्रेष्ठ ( for the prior half ). D2.6 संजय ( for सृञ्जय ). — Colophon om. in D7.8. — *Sub-parvan* : MSS. अभिमन्युवध. — *Adhy. name* : B Dc1 D3-6 षोडशराजिकं ; Dn1 °राजकीयं ; Dn2 °राजीयं ; D1.2 °राजकं ; T G3.4 °राजके जामदग्न्यचरितानुवर्णनं ; G1.2 M1.2 जामदग्न्यचरितं. — *Adhy. no.* : B1 D3 S 67 ; B2 Dn1 68 ; D2 61. — *Śloka no.* : Dc1 24 ; Dn1 26. — ( L. 873 ) G5 पुण्यं यशस्यमाख्यानं ; M3-5 पुण्यमायुष्यमाख्यानं ( for the prior half ). B Dc1 Dn2 D1-8 -राजिकं ( for -राज° ). — ( L. 874 ) B1 तु ; Dn1 D7.8 न ( for स ). D2.6.7 संजयः ( for सृञ्जयः ). — M3.4 om. lines 875-879. — ( L. 875 ) D8 T G M1.2.5 तदा ( for तथा ). Dn1 D7.8 [आ]सीनो ; T G M1.2 दीनो ; M5 राजन् ( for [आ]सीनं ). — ( L. 876 ) Dn1 D7.8 S ( M3.4 om. ) कच्चिन्मया व्याहृतं यद् ( G5 ते ) ( for the prior half ). S ( M3.4 om. ) हृदये तत्स्थितं ( G5 M °रं ) तव ( for the post. half ). — ( L. 877 ) B2.5 Dc1 Dn2 D1-6 अहो ( for आहो ). T G3.4 नान्यतो ; M5 नान्वतो ( for अन्ततो ). Dn1 D7.8 अ( D7 आ )हो स्विदनुशोचध्वं ; G1 M1.2 अहो नात्यंततो नष्टं ( for the prior half ). G1 M1.2 शूद्रपतान्. Dn1 D3.4.6 श्राद्धं श्रद्धाहृतं य( D8 न )था ; Dn2 D5 श्राद्धं ते दी( D5 तद्दी )यतामिति ; D7.3 शांतं शूद्री- ( D7 °द्रि )पतीनिव ( for the post. half ). — Before line 878, S ( M3.4 om. ) ins. व्यासः. — ( L. 878 ) Dn1 D7.8 तम् ( for स ). Dn1 उक्तं ( for उक्तः ). D2 संजयस् ( for सृञ्जयस् ). B4 संजयः प्रांजलिस्ततः ( for the post. half ). — B4 om. lines 879-884. — ( L. 879 ) B1-3.5 Dc1 Dn2 D1-6 एतच्छ्रुत्वा ( D3.6 तच्छ्रुत्वा तु ) महाबाहो ( for the prior half ). Dn1 D7 अद्भुतं ( for उत्तमम् ). — Before line 880, G1 M1.2 ins संजयः. G2.4.5 om. lines 880-884. — ( L. 880 ) Dn2 D3.4.6.8 G1 M यज्विनां. — ( L. 881 ) D8 दसिन्येन ( for विस्मयेन ). B1-3.5 Dc1 Dn2 D1.3-5 हते ( for हते ). Dn1 D7.8 विस्मयो हि न मे शोको ; G1 M विश्रवेण हतः शोकस् ( for the prior half ). Dn2 D4-8 G1 M तमांसीव ( for

विपाप्मास्म्यव्यथोपेतो ब्रूहि किं करवाण्यहम् ।
नारद उवाच ।
दिष्ट्यापहतशोकस्त्वं वृणीष्वेह यदिच्छसि ।
तत्तत्प्रपत्स्यसे सर्वं न मृषावादिनो वयम् ।
सृञ्जय उवाच ।
एतेनैव प्रतीतोऽहं प्रसन्नो यद्भवान्मम । [885]
प्रसन्नो यस्य भगवान्न तस्यास्तीह दुर्लभम् ।
नारद उवाच ।
पुनर्ददामि ते पुत्रं दस्युभिर्निहतं वृथा ।
उद्धृत्य नरकात्कष्टात्पशुमप्रोक्षितं यथा ।
व्यास उवाच ।
प्रादुरासीत्ततः पुत्रः सृञ्जयस्याद्भुतप्रभः ।
प्रसन्नेनर्षिणा दत्तः कुबेरतनयोपमः । [890]
ततः संगम्य पुत्रेण प्रीतिमानभवन्नृपः ।
ईजे च क्रतुभिर्मुख्यैः समाप्तवरदक्षिणैः ।
अकृतास्त्रश्च भीतश्च न च सांनाहिको हतः ।
अयज्वा चानपत्यश्च ततोऽसौ जीवितः पुनः ।
शूरो वीरः कृतास्त्रश्च प्रमथ्यारीन्सहस्रशः । [895]
अभिमन्युर्गतः स्वर्गं पृतनाभिमुखो हतः ।
ब्रह्मचर्येण यान्कांश्चित्प्रज्ञया च श्रुतेन च ।
इष्टैश्च क्रतुभिर्यान्ति तांस्ते पुत्रोऽक्षयान्गतः ।
विद्वांसः कर्मभिः पुण्यैः स्वर्गमीहन्ति नित्यशः ।
न तु स्वर्गादयं लोकः काम्यते स्वर्गवासिभिः । [900]
तस्मात्स्वर्गगतं पुत्रमर्जुनस्य हतं रणे ।

---

तम° ). Dn1 D7.8 ह्यब्रवीचार्कतेजसं ( for the post. half ). — ( L. 882 ) G1 M3-5 अनुशाधि त्वं ; G3 M1.2 अनु मां ( M1.2 मा ) शाधि ( for अव्यथोपेतो ). Dn1 D7.8 विपाप्मा नष्टशोकोऽहं ; T विपापोस्म्यनु मां शाधि ( for the prior half ). Dn1 D7.8 उत ( for अहम् ). S ( G2.4.5 om. ) यदा ( T °था ) त्थ करवाणि तत् ( for the post. half ). — ( L. 883 ) B1-3 Dc1 Dn2 D2-8 [अ]पहत- ; B5 °हुत- ( for °हत- ). M1.2 गृहीष्व ( for वृणीष्व ). T G1.3 M1.2 transp. इह and यद्. M3-5 च ( for [इ]ह ). Dn1 D7.8 यमिच्छसि ; Dn2 D1.3.4.6 यदीच्छ° ( for यदिच्छ° ). — ( L. 884 ) D3.4.6 संप्राप्स्य( D4 °प्य )ते ( for प्रपत्स्यसे ). S ( G2.4.5 om. ) तत्ते संपत्स्यते सर्वं ( for the prior half ). D3.6 अमृषा- ( for न मृषा- ). Dn1 D7.8 स्व( Dn1 त )प्रियावादिनो वयं ( for the post. half ). G2 om. the ref. D1.2.6.7 संजय ( for सृञ्जय ). — Dn1 om. lines 885-886. — ( L. 885 ) Dn2 च ( for [ए]व ). D1.3.6 च प्रीतोऽहं ( for प्रती° ). S पावितोऽहमनेनैव ( for the prior half ). D5 transp. प्रसन्नो and यत्. B1.2 ( marg. ).3 D7.8 भगवान् ; D2 [s]थ भवान् ( for यद्भवान् ). — ( L. 887 ) Bom. ed. मृतं ( for पुनर् ). Dc1 D2.6 G5 ददानि ; G2 दास्यामि ( for ददामि ). Dn1 D5-8 तथा ; D4 तदा ( for वृथा ). — ( L. 888 ) B4.5 Dn2 D1-6 पशुवत्प्रोक्षितं ( D1 °त्प्रोक्षणं ; D2.5 °त्प्रेक्षितं ) ; T G3.4 °वत्प्रेषितं ; G1 M3-5 °त्प्रोषितं ( for °मप्रोक्षितं ). B5 Dn2 D4.5 om. the ref. — ( L. 889 ) Dn1 D8 यथा ( for ततः ). D2.6 संजयस्य ( for सृञ्ज° ). Dn1 D7.8 युधिष्ठिर ; D3.5 [अ]द्भुतः प्रभुः ; G3 [अ]द्भुतप्रदः ; G5 °प्रियः ( for °प्रभः ). — ( L 890 ) D7.8 प्रसन्नऋषिणा दत्तः ( for the prior half ). D5 कुबेरस्य सुतो यथा ( for the post. half ). S दत्तः प्रसन्नेन तदा ऋषिणा दिव्य( G1 M1.2 °णादित्य )वर्चसा. — ( L. 891 ) B2 प्रभुः ; Dn1 D7.8 पुनः ; D4 नृप ; T G1.3.4 ततः ; G2 तदा ( for नृपः ). — ( L. 892 ) G5 क्रतुशतैर् ( for च क्रतुभिर् ). B Dc1 Dn2 D1-6 पुण्यैः ; Dn1 यज्ञैः ( for मुख्यैः ). — ( L. 893 ) B1 अहतास्त्रश् ; B2.4 D1.2.5 अकृतार्थश् ( for °स्त्रश् ). T G2.3 हीनश् ; G4 हीनं ( for भीतश् ). B1 तु ( for च ). Dn1 सांनाहिका ; D1 शोच्योर्भको ; D3.4 सोमो( D4 °मे )र्भको ; D7.8 G1 M संनाहको ( M3-5 °तो ) ( for सांनाहिको ). Dn2 नराणां बहुना हतः ; D5 नराणां चाहुतो मृतः ; D6 न च सेव्यो न शोभदः ; T G2-5 न च संनाहकोविदः ( for the post. half ). — ( L. 894 ) B Dc1 Dn2 D1.2.4-6 तु ; Dn1 न ( for the first च ). Dn1 जीवामि ते ; D4.5 [s]सौ जीवितात् ; D7.8 G2 जीवापितः ; T G3.4 जीवायितः ; G1 M1.2 वै जीवितः ; M3.5 ( sup. lin. ) जीवान्वितः ; M4 lacuna ( for ऽसौ जीवितः ). D8 पुरा ( for पुनः ). D6 ततोतो जीवति पुमान् ( for the post. half ). — ( L. 895 ) Dn1 श्रुतो ( for शूरो ). B4 D5 धीरः ; D2 मन्युः ( for वीरः ). B2.4 D1-3 कृतार्थश् ( for °स्त्रश् ). B Dc1 Dn2 D1-6 प्रताप्य ( for प्रमथ्य ). — ( L. 896 ) B Dc1 Dn2 D1-6 वीरः ( for स्वर्गं ). B4.5 D5.6 पृतनाभिमुखे ; S संग्रामेभिमुखे. — ( L. 897 ) B4 D2 यां ; Dn1 D7.8 ये ( for यान् ). B3 T G M3-5 लोकान् ; B4 D2 कांचित् ; Dn1 D7.8 M1.2 लोकाः ; Dn2 कांश्चित् ; D3 काश्चिद् ( for कां° ). B4 श्रद्धया ; Dn1 D7.8 यजुषा ; D3 यज्ञेन ; T G2.5 M1 प्रजया ( for प्रज्ञया ). G2 धनेन ( for श्रुतेन ). D4 वा ( for च ). — ( L. 898 ) B1-3.5 D1.6 शिष्टैश् ; Dc1 खिष्टैश् ( for इष्टैश् ). D1.4.6 T G2-5 याति ( for यान्ति ). B3 D3.4.6 च ; Dn2 तु ( for ते ). Dn2 D2 [s]क्षयां. T G1.3.4 M तान्सौभद्रो गतोक्षयान् ; G2 तान्सौभद्रोक्षयान्गतान् ; G5 सौभद्रोपि गतोक्षयान् ( for the post. half ). — ( L. 899 ) M4

नेहानयितुं शक्यं हि किंचिदप्राप्यमीशितुम् ।
एवं ज्ञात्वा स्थिरो भूत्वा मा शुचो धैर्यमाप्नुहि ।
जीवन्त एव नः शोच्या न तु स्वर्गगतानघ ।
शोचतो हि महाराज अघमेवाभिवर्धते । [ 905 ]
तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेद्बुधः ।
प्रहर्षमभिमानं च सुखप्राप्तिं च चिन्तयन् ।
एतदाहुर्बुधाः श्रेयो न शोकः शोक उच्यते ।
एवं विद्वन्समुत्तिष्ठ प्रयतो भव मा शुचः ।
श्रुतस्ते संभवो मृत्योस्तपांस्यनुपमानि च । [ 910 ]
सर्वभूतसमत्वं च चञ्चलाश्च विभूतयः ।

---

क्रतुभिः ( for कर्मभिः ). B2.3 Dn2 इच्छंति ( for ईहन्ति ). S ईहंते स्वर्गमुत्तमं ( for the post. half ). — ( L. 900 ) D2 न हि ; M3–5 ततः ( for न तु ). — ( L. 901 ) D5. 7. 8 स्वर्गं ( for स्वर्ग- ). S तस्मात्स्वर्गं ग( G5 M3–5 °गंग )तो राजन् ( G1. 5 °तः पुत्रो ) ( for the prior half ). G1 M ह्यर्जुनस्य ; G5 [ऽ]प्यर्जुनस्य ( for अर्जुनस्य ). T G3. 4 मुनो वशी ; G1 M [अ]च्युतो वशी ; G2 मुनो बली ; G5 [आ]त्मजो वशी ( for हतं रणे ). — ( L. 902 ) B3 नेह प्रनायितुं शक्यं ; B4 नेह चानयितुं शक्तः ; B5 नेहानाययितुं शक्यं ; Dn1 D7. 8 स नेहानयितुं शक्यः ; Dn2 D2 न नेहानयितुं शक्यः ( D2 °क्यं ) ; D4 नेहानेतुं शक्यं हि ; T G3 पुनरानीय न ह्यस्य ; G1 M1 नेहानयति न ह्यस्य ; G2. 4 नेहादहति न ह्यस्य ; G5 नेहानीहति न ह्यस्य ( sic ) ; M2–5 नेहानीये( M2 °य )त न ह्यस्य ( for the prior half ). Dn2 D2. 3 ईहितुं ; D1 ईपितुं ; T G1–4 M1. 2 ईशितुः ( for °तुम् ). B4 काश्चिदप्राप्यमीपितुं ; B5 किंचित्प्राप्येदमीप्सितं ; Dn1 D7. 8 °न्नप्राप्यमी- ( D8 °मा )हितं ; D4 तत्र नाप्राप्यमीहितुं ; D5. 6 किंचि( D6 कश्चि )न्नाप्राप्यमीहितुं ; G5 किंचिदस्याप्यमीहते ( sic ) ; M3–5 °दप्राप्तमीशितुः ( for the post. half ). — After line 902, B D ins. :

यां योगिनो ध्यानविविक्तदर्शनाः
प्रयान्ति यां चोत्तमयज्विनो जनाः ।
तपोभिरिद्धैरनुयान्ति यां तथा
तामक्षयां ते तनयो गतो गतिम् ।
अन्तात्पुनर्भावगतो विराजते [ 5 ]
राजेव वीरो ह्यमृतात्मरश्मिभिः ।
तामैन्दवीमात्मतनुं द्विजोचितां
गतोऽभिमन्युर्न स शोकमर्हति ।

[ ( L. 1 ) B1 या ( for यां ). Dn2 D1–6 ज्ञान- ; D3 यांति ( for ध्यान- ). B2 -विमुक्त- ( for -विविक्त- ). — ( L. 2 ) D6 चैव ; D7. 8 याश्च ( for यां च ). B1. 2 ( marg. ). 3. 4 Dc1 -यागयाजिनः ; B5 -याजिनो जनाः ; Dn1 -यज्ञयोगिनः ; D5 -याजिनो जनः ; D7. 8 -यज्ञयाजिनः ( for -यज्विनो जनाः ). — ( L. 3 ) Dn1 उग्रैर् ; D2 ईड्यैर् ( for इद्धैर् ). Dn1 ये वै ; D3 यद्वत् ( for यां तथा ). — ( L. 4 ) Dn1 तथाक्षयां यांति तपस्विनोपरे. — ( L. 5 ) Dn1 गतोगतिं ; D5 अथा पुनर् ; D7. 8 यान्नापु° ( for अन्तात्पु° ). Dn1 D5–8 भागवतो ; Dn2 भावततो ( for °गतो ). Dn1 D7. 8 वरीयान् ( for विराजते ). — ( L. 6 ) D2 राजेव. B1 धीरो ( for वीरो ). B5 D3 ह्यमृताशिभिः सह ; Dn2 D6 [ऽ]भि( D6 °सि )मतोमृताशिभिः ; D4 [ऽ]भिमतोमृताशिभिः ; D5 [ऽ]भिमतोमृताशिभिः ( for ह्यमृतात्मरश्मिभिः ). Dn1 D7. 8 नो वा विहीनः सहितोमृताशिभिः. — ( L. 7 ) Dn1 D7. 8 विरोचि( D7. 8 °षि )तां ; Dn2 D3. 4. 6 द्विजेरितां ; D2 द्विजैषितां ; D5 विजैषितां ( for द्विजोचितां ). — ( L. 8 ) Dn1 हि ( for स ). ]

— ( L. 903 ) T G2 ततो ( for एवं ). G1. 2 स्थितो ( for स्थिरो ). B Dc1 D1. 2 जहरीन् ; Dn2 D3–8 यतवाग् ( for मा शुचो ). G5 वीर्यम् ( for धैर्यम् ). — ( L. 904 ) Dn1 न ( for नः ). S जीवन्हि पुरुषः शोच्यो ( for the prior half ). D1 च ( for तु ). B1 Dc1 D7 S स्वर्गगतो ( for स्वर्गगता ). B2. 3 Dn2 D3. 4. 6 नृपाः ( B3 °प ) ; D7 [ऽ]नघाः ; G2 नृपः ( for [अ]नघ ). — ( L. 905 ) Dn1 D7. 8 सुशोचंतमथा( Dn1 °थो )यस्तम् ; T G2–4 स शोचन्ननघो य( G3 °घोर्य )श्च ; G1 M संशोचानोप्यधैय( M3–5 °धैर्य )श्च ; G5 न शोचानो**यो य ( for the prior half ). Dn2 D3–8 दुःखम् ( for अघम् ). S अनुवर्तते ( for अभिवर्धते ). Dc1 स्वधर्मो नाभिवर्धते ( for the post. half ). — D2 om. lines 906–908. — ( L. 906 ) Dn1 D7. 8 T G M1. 2 श्रेयसि ; D4 श्रयसे ( for श्रेयसे ). D6 प्रवर्तेत यः ( for °यतेद्बुधः ). M3–5 धैर्यमाप्नुहि भूपते ( for the post. half ). — ( L. 907 ) Dn1 D4–8 T G2–5 प्रहर्षं प्री( D4–8 G5 °र्षंप्री )तिनानंदं ; G1 M प्रहर्षं प्री( M5 °र्षः प्री )तिरा- ( M1. 2 °मा )नंदः ( for the prior half ). D1. 5 सुखं ( for सुख- ). B4 चिंतय ( for चिन्तयन् ). Dn1 D7. 8 S सुखमुत्सिक्तचित्ततां ( D7. 8 G1 M3–5 °ता ) ( for the post. half ). — ( L. 908 ) S शौचम् ( for श्रेयो ). B Dc1 Dn2 D3. 4–6 एतद्बुद्ध्वा बुधः शोकं ( for the prior half ). D4 वः ( for न ). Dn1 D7. 8 श्रेय ; D3 ( marg. ) कर्तुम् ( for शोक ). Dn2 न करोत्यात्मनोहितं ; S अ( G5 आ )शौचं शोकमु( G5 M3–5 °क उ )च्यते ( for the post. half ). — D4 om. line 909. — ( L. 909 ) Dc1 Dn G1. 2. 4. 5 विद्वान् ; D5 विदन् ( for विद्वन् ). Dn1 D7. 8 प्रसन्नो ; D5 प्रयत्तो ; S सुमना ( for प्रयतो ). — ( L. 910 ) Dn1 D7. 8 श्रेयांसि ( for तपांसि ). — ( L. 911 ) D4 *वलाश् ( for चञ्च° ). S महामा चाभिचो( G4. 5 °पि चो )दितं

सृञ्जयस्य तु तं पुत्रं मृतं संजीवितं पुनः ।
एवं विद्वन्महाराज मा शुचः साधयाम्यहम् ।
संजय उवाच ।
एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत ।
वागीशाने भगवति व्यासे व्यभ्रनभःप्रभे । [915]
गते मतिमतां श्रेष्ठे समाश्वास्य युधिष्ठिरम् ।
पूर्वेषां पार्थिवेन्द्राणां महेन्द्रप्रतिमौजसाम् ।
न्यायाधिगतवित्तानां तां श्रुत्वा यज्ञसंपदम् ।
संपूज्य मनसा विद्वान्विशोकोऽभूद्युधिष्ठिरः ।
पुनश्चाचिन्तयद्दीनः किं स्विद्वक्ष्ये धनंजयम् । [920]

Colophon.

9

After the ref. of 7. 84. 1, S ins.:

किरन्तं शरवर्षाणि रोषाद्द्रोणं महामृधे ।
वित्रासयन्तं तां सेनां कौन्तेयानां महीपते ।
दृष्ट्वा ततो महेष्वासो निघ्नन्तं च रथान्भृशम् ।
घटोत्कचो महाबाहू रणायाभिजगाम ह ।
पिशाचवदनैर्युक्तं रथं काञ्चनभूषितम् । [5]
समास्थाय महाराज नानाप्रहरणैर्वृतम् ।
दंशितस्तपनीयेन कवचेन सुवर्चसा ।
भूषणैराचिताङ्गश्च नदन्निव च तोयदः ।
हैडिम्बेयः सुसंक्रुद्धो द्रोणमभ्यद्रवद्बली ।
तमभ्यधावदायान्तं क्रुद्धरूपमलम्बुसः । [10]
ऋक्षचर्मपरिक्षिप्तं रथमास्थाय दंशितः ।
रक्तोष्ठः सधनुः प्रांशुः कल्पवृक्ष इव स्थितः ।
क्षिपञ्छतघ्नीं विपुलां मुसलोपलतोमरान् ।
मुसण्ढीर्बहुलाश्चैव त्रिशूलानपि पट्टसान् ।
कर्पणाञ्छतधारांश्च पिनाकान्विविधांस्तथा । [15]
चक्राणि च क्षुरप्राणि क्षेपणीश्च कटंकटान् ।
नाराचान्विविधानस्यन्सकङ्कोलूकवायसः ।

(G1 M1.2 °तः) (for the post. half). — (L. 912) D2 संजयस्य (for सृञ्ज°). B2 Dn2 D3-6 च तं पुत्रं; Dn1 D7.8 श्रुतः पुत्रो; T G2-5 तु पुत्रोसौ; G1 M तु ते (M3-5 वै) पुत्रो (for तु तं पुत्रं). Dn1 D7.8 मृतो जीवापितः पुनः; S मृतः संजीवितः श्रुतः (for the post. half). — (L. 913) Dn D6.7 विद्वान्; D8 -विधो (for विद्वन्). Dn1 D2 G6 साधु यामि; D7.8 त्वं व्रजामि (for साधयामि). MSS. om. the ref. — (L. 915) Dn1 D7.8 अदर्शनं (for वागीशाने). B3 शुभ्र-; T G2-5 व्यक्त- (for व्यभ्र-). Dn1 D7.8 व्यासे व्योमगते तदा (for the post. half). — (L. 916) D1-6 गतिमतां (for मति°). Dc1 (marg. as above) समासाद्य (for °श्वास्य). — (L. 917) Dn2 D3.4.6 T G2-5 M4 सर्वेषां (for पूर्वेषां). M3.5 (sup. lin.) स(M5 पू)र्वेषां पांडुपुत्राणां (for the prior half). — (L. 918) D1 -संपदां (for °दम्). S श्रुत्वा यज्ञेषु संपदः (G1 M1.2 °दं) (for the post. half). — (L. 919) D2 G1.3-5 M निःशोको (for वि°). — (L. 920) Dn2 D4.6 वीरं; D3.5 T G2-4 वीरः (for दीनः). Dn1 D7.8 पुनश्च चिंतयोद्विग्नः; G5 पुनश्चैव भयाद्दीनः (for the prior half). — Colophon. — *Sub-parvan:* MSS. अभिमन्युवध. — *Adhy. name:* B Dc1 Dn2 D1.3-6 षोडशराजि- (D1 °जी-; D5 °ज)कं समाप्तं; Dn1 व्यासागमने मृत्यूक्तौ षोडशराजकीयं समाप्तं; D2.7.8 षोडशराजकीयं समाप्तं; T G2-4 षोडशराजकं युधिष्ठिरशोकापनोदनं; G1 M1.2 व्यासगमनं; G1.2.4.5 M1.2.5 षोडशराजकं समाप्तं. — *Adhy. no.:* B2 Dn1 69; D2 62; T G M3-5 68. — *Śloka no.:* Dc1 Dn1 26.

9

(L. 1) M1.2 किरंतः (for किरन्तं). M1.2 द्रोणो (for द्रोणं). G5 महाहवे (for °मृधे). — (L. 2) G2 महात्मनां (for महीपते). — (L. 3) T G3 द्रोणं (for दृष्ट्वा). G1 M1.2 महेष्वासं (for °ष्वासो). G2 निघ्नतां; M1 निघ्नंतश्च (for निघ्नन्तं). G1 M तथा (for रथान्). — (L. 6) G1 M नानाप्रहरणोद्यतः (for the post. half). — (L. 8) T G3.4 उचितांगश् (for आचि°). — (L. 10) M4.5 आयातं (for आयान्तं). — (L. 12) T G2-5 M5 (sup. lin. as above) सधनुष्पाणिः (for °नुः प्रांशुः). T G3.4 प्रांशुकल्प; G2 प्रांशुः काल (for कल्पवृक्ष). — (L. 13) G3.5 M3-5 शतघ्नीर् (for शतघ्नीं). G4 विपुलान् (for विपुलां). G2-5 मुसलोपम- (for °पल-). — (L. 14) T मुसुंठीर्; G1 M मुसंठीर्; G2 मुसुठी-; G4 मुसंठी- (for मुसण्ढीर्). M3-5 विपुलाश् (for बहु°). G2 शतघ्नीश् (for त्रिशूलान्). G1 M आसि-; G2 चापि (for अपि). — (L. 15) G5 कर्पराञ् (for कर्पणाञ्). T1 G3.4 M4.5 शितधारांश् (for शतधारांश्). M3-5 तदा (for तथा). — (L. 16) G1 M1.2 क्षेपणीरपि टंकटान्; M3 क्षेपाण्यधिकटंगरान्; M4.5 क्षेपण्यसिकटंगरान् (for the post. half). — (L.

चिक्षेप धनुरादाय निनदन्भैरवान्रवान् ।
तं रौद्रं क्रूरमायान्तं दृष्ट्वा कालमिवागतम् ।
प्राद्रवद्भयसंविग्ना सा राजन्पाण्डुवाहिनी । [ 20 ]
सत्यकस्तु नरव्याघ्रो दृष्ट्वा तं राक्षसं युधि ।
अभ्ययादमरप्रख्यो भ्रामयित्वा महद्धनुः ।
अभ्यद्रवच्च तद्रक्षस्तिष्ठ तिष्ठेति चाब्रवीत् ।
अलम्बुसं राक्षसेन्द्रं सोऽस्त्रवर्षैरवाकिरत् ।
ततः पाण्डवसैन्यानि विद्रुतान्यथ भारत । [ 25 ]
निरीक्ष्याभ्यद्रवत्तूर्णं त्वरमाणो घटोत्कचः ।
चिक्षेप च गदाशक्तीस्तोमरानथ पट्टसान् ।
हेमचित्रत्सरूनुग्रान्खड्गानाकाशसप्रभान् ।
अन्योन्यमारादालोक्य राक्षसौ तौ महाबलौ ।
भैरवं नदतुर्नादान्सतोयाविव तोयदौ । [ 30 ]
ततः प्रववृते युद्धं घोरं राक्षससिंहयोः ।
यादृगेव पुरा वृत्तं रामरावणयोर्मृधे ।
तौ शक्तीश्च पिनाकांश्च वज्रान्खड्गान्परश्वधान् ।
अन्योन्यमभिसंक्रुद्धौ तदा व्यसृजतामुभौ ।
आकृष्यमाणे धनुषी तयोर्बाहुबलेन च । [ 35 ]
यन्त्रेणेव तदा राजन्भृशं नादान्प्रचक्रतुः ।
अलम्बुसस्ततश्चक्रं कृतान्तज्वलनप्रभम् ।
घटोत्कचाय चिक्षेप यत्नमास्थाय वीर्यवान् ।
तद्भैमसेनिः संप्रेक्ष्य चक्रं वेगवदन्तरे ।
गदया ताडयामास तद्दीर्णं शतधाभवत् । [ 40 ]
ततोऽग्निचूर्णैः सहसा चक्रघातविनिःसृतैः ।
दंशकैरिव सा सेना पतद्भिर्भृशसंकुला ।
ततः प्रतिहते चक्रे स वीरो रोषसंकुलः ।
प्राहिणोत्तरसा शूलं शक्तीर्दशशतास्तदा ।
ज्वलन्तीर्विकिरन्तीश्च ज्वालामालाः सहस्रशः । [ 45 ]
युगान्तोल्कानिभास्तीक्ष्णा हेमदण्डा महास्वनाः ।
ताश्चापतन्तीः संप्रेक्ष्य राक्षसस्य घटोत्कचः ।
अर्धचन्द्रैः प्रचिच्छेद नाराचैः कङ्कपत्रिभिः ।
ततो रोषपरीताङ्गः प्रमुमोच स राक्षसः ।
शरवर्षं महाघोरं घटोत्कचरथं प्रति । [ 50 ]

10

After 7. 84. 21$^{ab}$, S ins.:

घटोत्कचोऽप्यसंभ्रान्तः शरवर्षं महत्तरम् ।
अलम्बुसवधप्रेप्सुर्मुमोचाग्निरिव ज्वलन् ।
अलम्बुसरथाच्चोग्राद्घटोत्कचरथादपि ।
शराः प्रादुर्भवन्ति स्म द्विरेफा इव खाद्दिशः ।
अभ्रच्छायेव रचिता बाणैस्तत्र नरेश्वर । [ 5 ]
न स्म विज्ञायते किंचिदन्धकारे कृते शरैः ।
तत आकर्णमुक्तेन भल्लेन च घटोत्कचः ।
अलम्बुसस्य चिच्छेद शिरो यन्तुर्महाबलः ।

---

17 ) G1 M1. 2 अस्य ( for अस्यन् ). G1 M1 संकंकोलूक- ; M4. 5 सकरो° ( for सकङ्को° ). G1 M1. 2. 4. 5 -वाससः ; G2. 5 -वायसान् ( for °सः ). —( L. 18 ) T G2 विनदन् ( for नि° ). —( L. 19 ) T रौद्रः ( for रौद्रं ). M3. 4 लोकम् ( for कालम् ). —( L. 20 ) T2 प्राद्रवन् ( for °वद् ). G6 राजन्पांडववाहिनी ( for the post. half ). —( L. 21 ) G3 सत्वकस् ; G4. 5 सात्यकिस् ( for सत्यकस् ). T G3–5 रथ- ( for नर- ). —( L. 22 ) G1 M धनुर्हि सः ( for महद्धनुः ). —( L. 23 ) T G2 तं ( for तद् ). —( L. 24 ) T G3. 4 तोत्र- ; G1 M1. 2 शर- ( for सोऽस्त्र- ). —( L. 27 ) M2–5 गदाः ( for गदा- ). —( L. 28 ) T1 G3 -चित्रान्सरून् ( for -चित्रत्स° ). —( L. 30 ) M4. 5 नेदतुर् ( for नदतुर् ). G2–5 नादं ( for नादान् ). —( L. 31 ) G3. 4 तयो ( for घोरं ). —( L. 33 ) T G2–4 स ( for तौ ). T G2–4 परश्वथान् ( for °धान् ). —( L. 34 ) T तथा ( for तदा ). T2 G2 [अ]व्यजहताम् ( for व्यसृज° ). —( L. 35 ) G1 आकृष्यमाने. T G2–4 धनुषि. M3–5 इ ( for च ). —( L. 36 ) G1 M1. 2 महाराज ( for तदा राजन् ). —( L. 37 ) T G3. 4 स तच् ( for ततश् ). M3. 4. 5 ( *sup. lin.* ) क्षुरप्रं ( for कृतान्त- ). G1 M1. 2 स्फुरज्ज्वलनसंनिभं ( for the post. half ). —( L. 39 ) M3–5 चक्रं वै ज्वलनप्रभं ( for the post. half ). —( L. 41 ) G2 चक्रपात- ( for °घात- ). —( L. 42 ) M3. 4 -संकुलौ ( for -संकुला ). G2 पतद्भिर्भृशमाकुला ( for the post. half ). —( L. 44 ) T G3. 4 तूर्णं ( for शूलं ). T G2–4 दशशतं ( for °शतास् ). G1 M1. 2 तथा ( for तदा ). —( L. 45 ) T G2–4 च ( for वि- ). T G2–4 समंततः ( for सहस्रशः ). —( L. 50 ) T शरवर्षैर् ( for °वर्षं ).

10

( L. 2 ) M1–4 -प्रेप्सुं ( for -प्रेप्सुर् ). G1 धर्मे चाग्निरिव ज्वलन् ( for the post. half ). —( L. 3 ) G5 -वधाच् ( for -रथाच् ). G5 -वधाद् ( for -रथाद् ). —( L. 4 ) G2 प्राणैस् G5 शाखिनः ( for खाद्दिशः ). —( L. 5 ) G2 प्राणैस्

ततोऽपरैर्वेगवद्भिः क्षुरैस्तस्य घटोत्कचः ।
अक्षमीषां युगं चैव चिच्छेद युधि ताडयन् । [ 10 ]
अवस्कन्द्य रथात्तूर्णं कैर्मीरिः क्रोधमूर्छितः ।
तस्मिन्मायामयं घोरमस्त्रवर्षं ववर्ष ह ।
घटोत्कचोऽप्याशु रथात्प्रस्कन्द्य स तमेव च ।
मायास्त्रेणैव मायास्त्रं व्यधमत्समरे रिपोः ।
हैडिम्बेनार्द्यमानस्तु युधि सोऽलम्बुसो दृढम् । [ 15 ]
अन्तर्हितो महाराज घटोत्कचमयोधयत् ।
अन्तर्धानगतं दृष्ट्वा तत्र तत्र घटोत्कचः ।
गदया ताडयामास वेगवत्या महाबलः ।
उत्पपात ततो व्योम्नि प्रहारपरिपीडितः ।
अलम्बुसो राक्षसेन्द्रः सहसा पक्षिराडिव । [ 20 ]
घटोत्कचोऽप्यसंभ्रान्तः खड्गपाणिरथोत्पतत् ।
ततो वेगेन महता विवर्षिपुरिवाम्बुदः ।
तमापतन्तं संप्रेक्ष्य कैर्मीरी राक्षसोत्तमः ।
अभिदुद्राव वेगेन सिंहः सिंहमिव स्थितम् ।
दक्षिणेनासिमुद्यम्य वक्षः प्रच्छाद्य वर्मणा । [ 25 ]
अभिदुद्राव वेगेन वेगवन्तं घटोत्कचः ।
तावुभौ वेगसंरब्धावलम्बुसघटोत्कचौ ।
अन्योन्यस्य तथैवोरू समाजघ्नतुरञ्जसा ।
अन्योन्यस्याभिघातेन तयो राक्षससिंहयोः ।
शैलेनाभिहतस्यैव शैलस्याभून्महास्वनः । [ 30 ]
ततोपसृत्य सहसा पुनरापेततुर्भृशम् ।
चरन्तावसिमार्गांस्तान्विविधान्राक्षसोत्तमौ ।
तयोर्गात्रेषु पतितावसी भिन्नौ निपेततुः ।
वेगोत्सृष्टे मघवता वज्रे शैलतटेष्विव ।
ततः सैन्यानि ददृशुस्तद्युद्धमतिदारुणम् । [ 35 ]
युद्धं तयो राक्षसयोरामिषे श्येनयोरिव ।
ततो लोहितरक्ताक्षावुभौ तौ राक्षसोत्तमौ ।
अदृश्येतां तु शार्दूलौ सन्ध्यारक्ताविवाम्बुदौ ।
चक्राते श्येनवच्चैव मण्डलानि सहस्रशः ।
उभौ निस्त्रिंशहस्तौ तौ सपक्षाविव पक्षिणौ । [ 40 ]
ततो भ्राम्य तु तं खड्गं पाण्डोः किर्मीरनन्दनः ।
चिक्षेपास्य शिरो हर्तुं स च तस्य घटोत्कचः ।
तावसी युगपद्दीप्तौ समेत्य विपुलौ भुवि ।
पतितौ तौ तु बाहुभ्यां राक्षसौ समसज्जताम् ।
शीर्षघातांसघातैश्च परस्परमथाहतौ । [ 45 ]
पुनर्विमिश्रितौ वीरौ व्यायुध्येते मुहुर्मुहुः ।

11

After 7. 104. 33, T $G_{2-5}$ ins. :

भीमोऽपि च महाराज वैकर्तनमुपाद्रवत् ।

---

( for बाणैस् ). —( L. 6 ) $G_3$ शयैः ( for शरैः ). —( L. 10 ) $G_2$ $M_{2, 3, 5}$ ताडयत् ( for °यन् ). —( L. 11 ) $G_1$ $M_{3, 4}$ कैर्मिरिः ; $G_{3-5}$ कैर्मिरः ( for कैर्मीरिः ). —( L. 13 ) $G_1$ $M_{1, 2}$ [अ]थ ( for [आ]शु ). $G_4$ सममेव ( for स तमेव ). $G_1$ M ह ( for च ). —( L. 15 ) $G_1$ $M_{1, 2}$ राक्षसो ; $M_{3-5}$ युद्धे सो ( for युधि सो ). $G_1$ $M_{1, 2}$ रणे ; $G_5$ [ऽ]द्रवत् ; $M_{3-6}$ बली ( for दृढम् ). —( L. 17 ) $G_1$ M तं तत्र च ( for तत्र तत्र ). —( L. 21 ) T $G_{2-4}$ अथोपतत् ( for अथोत्पतत् ). —( L. 22 ) $G_1$ $M_2$ विवर्षिपुमिवांबुदं ; $M_{3, 4}$ विवर्षुरिव चांबुदः ( for the post. half ). —( L. 23 ) $M_{3, 4}$ कैर्मिरिं ( for कैर्मीरी ). $G_2$ कैर्मिरी राक्षसेश्वरः ( for the post. half ). —( L. 24 ) $M_5$ [उ]त्थितं ( for स्थितम् ). $M_{3, 4}$ सिंहः सिंह इवोत्थितं ( for the post. half ). —( L. 25 ) $G_2$ $M_5$ ( *inf. lin.* ) चर्मणा ( for व° ). —( L. 26 ) $G_1$ घटोत्कचं. —( L. 30 ) T $M_{3-5}$ अभ्यहतस्य ( for अभि° ). $G_1$ M आसीन् ( for अभून् ). $G_{3, 4}$ महात्मनः ( for °स्वनः ). — $G_4$ om. lines 31-35. —( L. 31 ) $G_1$ $M_{1, 2}$ तरसा ( for सहसा ). $M_{3-5}$ दिवं ( for भृशम् ). —( L. 32 ) $G_3$ अतिमार्गांस् ( for असिमार्गांस् ). —( L. 33 ) T $G_{1, 2}$ M सन्नौ ( for भिन्नौ ). —( L. 34 ) $G_1$ -हते इव ; $M_{1, 2}$ -हताविव ( for -तटेष्विव ). —( L. 35 ) $G_1$ $M_{1, 2}$ तत्र ( for ततः ). —( L. 36 ) $G_1$ $M_{1, 2}$ युद्धे ( for युद्धं ). —( L. 37 ) $G_1$ $M_{1, 2}$ उभौ ( for ततो ). $G_1$ M -रक्तांगाव् ( for -रक्ताक्षाव् ). —( L. 38 ) T $G_2$ अथैक्ष( $G_2$ °क्ष्य )तां ; $G_{3-5}$ तथैक्ष्येतां ( for अदृश्येतां ). $G_1$ $M_{1, 2}$ तौ व्यूढौ ( for शार्दूलौ ). —( L. 40 ) $G_2$ पर्वतौ ( for पक्षिणौ ). —( L. 41 ) $G_5$ भ्रामयित्वा ( for ततो भ्राम्य ). $G_3$ ततो भ्राम्यकृतं खड्गं ( for the prior half ). $G_1$ $M_{1, 2}$ तदा ( for पाण्डोः ). T -मर्दनः ; $G_2$ -मर्दनौ ( for -नन्दनः ). —( L. 44 ) $G_1$ $M_{3, 4}$ समसज्जतुः ( for °ताम् ). —( L. 45 ) $G_1$ $M_{1, 2}$ शीर्षघातांसघाताभ्यां ; $G_{2-5}$ शीर्षाघातांसघातैश्च ( for the prior half ). —( L. 46 ) $G_1$ $M_{1, 2}$ व्यायुध्येतां ; $M_{3-5}$ अयुध्येतां ( for व्यायुध्येते ).

11

( L. 2 ) T $G_2$ आसुरेव च ( hypermetric ) ( for °रे

आसुरे तु महासैन्ये तारकं पावकिर्यथा ।

तयोरेवं महद्युद्धमभवद्भीमकर्णयोः ।

तं भीमसेनो महता शरवर्षेण वारयन् ।

विव्याध सारथिं चास्य हयांश्च चतुरः शरैः । [ 5 ]

ध्वजं चास्य पताकां च भल्लैः संनतपर्वभिः ।

रथं च चक्ररक्षौ च भीमश्चिच्छेद मारिष ।

कर्णोऽपि रथिनां श्रेष्ठो भीमसेनेन कम्पितः ।

खड्गचर्मधरो राजन्भीममभ्यद्रवद्बली ।

भीमश्चिच्छेद खड्गं च चर्मणा सह मारिष । [ 10 ]

दृष्ट्वा कर्णं च पार्थेन बाधितं बहुभिः शरैः ।

दुर्योधनो महाराज दुःशलं प्रत्यभाषत ।

कर्णं कृच्छ्रगतं पश्य शीघ्रं यानं प्रयच्छ ह ।

एवमुक्तस्ततो राजा दुःशलः समुपाद्रवत् ।

दुःशलस्य रथं कर्णश्चारुरोह महारथः । [ 15 ]

तौ पार्थः सहसा गत्वा विव्याध दशभिः शरैः ।

पुनश्च कर्णं विद्ध्वापि दुःशलस्य शिरोऽहरत् ।

दुःशलं निहतं दृष्ट्वा भीमसेनेन मारिष ।

तस्यैव धनुरादाय कर्णो विव्याध पाण्डवम् ।

अन्योन्यं समरे वीरौ युयुधाते महाबलौ । [ 20 ]

शत्रुघ्नौ शत्रुमध्ये तु बलवज्रभृताविव ।

भीमो विद्ध्वा हयांश्चैव सारथिं च पुनः पुनः ।

कर्णमभ्यद्रवत्पार्थः प्रहसंश्च महाबलः ।

ततो व्यायच्छमानस्य भीमसेनस्य संयुगे ।

तत्सैन्यं शकलीभूतं न प्राज्ञायत किंचन । [ 25 ]

### 12

After 7. 114. 42, B $D_{c1}$ $D_5$ ins.:

ततश्चटचटाशब्दो गोधाघातादभूत्तयोः ।

तलशब्दश्च सुमहान्सिंहनादश्च भैरवः ।

रथनेमिनिनादश्च ज्याशब्दश्चैव दारुणः ।

योधा व्युपारमन्युद्धाद्दिदृक्षन्तः पराक्रमम् ।

कर्णपाण्डवयो राजन्परस्परवधैषिणोः । [ 5 ]

देवर्षिसिद्धगन्धर्वाः साधु साध्वित्यपूजयन् ।

मुमुचुः पुष्पवर्षं च विद्याधरगणास्तथा ।

ततो भीमो महाबाहुः संरम्भी दृढविक्रमः ।

अस्त्रैरस्त्राणि संवार्य शरैर्विव्याध सूतजम् ।

कर्णोऽपि भीमसेनस्य निवार्येषून्महाबलः । [ 10 ]

प्राहिणोत्तत्र नाराचानाशीविषसमाञ्रणे ।

तावद्भिरथ तान्भीमो व्योम्नि चिच्छेद पत्रिभिः ।

नाराचान्सूतपुत्रस्य तिष्ठ तिष्ठेति चाब्रवीत् ।

ततो भीमो महाबाहुः शरं क्रुद्धान्तकोपमम् ।

मुमोचाधिरथेर्वीरो यमदण्डमिवापरम् । [ 15 ]

तमापतन्तं चिच्छेद राधेयः प्रहसन्निव ।

त्रिभिः शरैः शरं राजन्पाण्डवस्य प्रतापवान् ।

पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः ।

### 13

After 7. 118. 15, $D_{n2}$ $D_{2,3,5,6}$ S ins.:

संजय उवाच ।

एवमुक्तो रणे पार्थो भूरिश्रवसमब्रवीत् ।

---

तु). —(L. 4) T [अ]वारयत्. —(L. 5) T $G_2$ विव्याथ (for °ध). —(L. 12) T दुःशळं. —(L. 13) T शीघ्रयानं. $G_2$ शीघ्रं तूपरकं जहि (for the post. half). — Before line 14, $G_5$ ins. संजय उवाच. —(L. 14) T दुःशळः. —(L. 15) T दुःशळस्य. —(L. 16) T $G_2$ विव्याथ. —(L. 17) $G_2$ च (for [अ]पि). T दुःशळस्य. —(L. 18) T दुःशळं. —(L. 19) T $G_2$ विव्याथ. —(L. 21) T $G_2$ बलिवज्र- (for बल°). —(L. 23) $G_2$ प्रहसन्वै (for °संश्च). T महारथः (for °बलः). —$G_{2-5}$ om. lines 24–25. —(L. 25) $T_1$ (before corr. as above). 2 शकलीकृत्तं (for °भूतं).

12

(L. 4) $D_5$ साधु साध्विति वै प्रोचुर् (for the prior half). —(L. 6) $D_5$ पूजयन् (for [अ]पूज°). —(L. 12) $D_5$ तावंति हि तथा भीमो (for the prior half). —(L. 14) $D_5$ संरंभी दृढविक्रमः (for the post. half). —(L. 15) $B_4$ अधिरथि (for °रथेर्). —(L. 17) $D_5$ शतं (for शरं).]

13

$D_{n2}$ $D_{2,3,5,6}$ om. the ref. $D_5$ om. line 1. $M_{3,4}$ हि कौंतेयो (for रणे पार्थ (for संजय). —(L. 1) $D_2$ हि कौंतेयो (for रणे पार्थो). —(L. 2) $D_{n2}$ $D_{2,3,5,6}$ व्यक्तं हि जी( $D_{2,3}$ व्यक्तैतज्जी-; $D_6$ व्यजेत जी )र्यमाणो( $D_5$ °नो )पि (for the prior half). $G_5$ संजयते (for रक्ष°). $D_{n2}$ $D_{2,3,5,6}$ बुद्धिं जरयते नरः (for the post. half). —(L. 3) $G_1$

व्यक्तमेव हि जीर्णः सन्बुद्धिं रञ्जयसे नृप ।
अनर्थकमिदं सर्वं यत्त्वया व्याहृतं प्रभो ।
हृषीकेशेन संबन्धं गर्हसे मां च मूढवत् ।
रणानामसि धर्मज्ञः सर्वशास्त्रार्थपारगः । [ 5 ]
न चाधर्ममहं कुर्यां जानंश्चैव हि मुह्यसे ।
युध्यन्ते क्षत्रियाः शत्रून्स्वैः स्वैः परिवृता नृप ।
भ्रातृभिः पितृभिः पुत्रैस्तथा संबन्धिबान्धवैः ।
वयस्यैरथ मित्रैश्च स्वबाहुबलमाश्रिताः ।
अहं हि सात्यकिं शिष्यं सुखसंबन्धिमेव च । [ 10 ]
मदर्थे युध्यमानं च त्यक्त्वा प्राणान्सुदुस्त्यजान् ।
मम बाहुं रणे राजन्दक्षिणं युद्धदुर्मदम् ।
निकृत्यमानं तं दृष्ट्वा कथं शत्रुवशं गतम् ।
त्वया निकृष्यमाणं च दृष्टवानस्मि निष्क्रियम् ।
न चात्मा रक्षितव्यो हि एको रणगतेन हि । [ 15 ]
यो यस्य युध्यतेऽर्थाय स संरक्ष्यो नराधिप ।
तं रक्ष्यमाणः स नृपो रक्षितव्यो महामृधे ।
यद्यहं सात्यकिं दृष्ट्वा तूष्णीमासिष्य आहवे ।
ततस्तेन वियोगश्च प्राप्यं नरकमेव च ।
रक्षितश्च मया यस्मात्तस्माल्लब्धो मया स च । [ 20 ]
यशश्चैव स्वपक्षेभ्यः फलं मित्रस्य रक्षणात् ।
यच्च मां गर्हसे राजन्नन्येन सह संगतम् ।
कस्तेन संगमं नेच्छेत्तत्र ते बुद्धिविभ्रमः ।
कवचं धुन्वतस्तुभ्यं रथं चारोहतः स्वयम् ।
धनुर्ज्यां कर्षतश्चैव युध्यतः सह शत्रुभिः । [ 25 ]
एवं रथगजाकीर्णे हयपत्तिसमाकुले ।
सिंहनादोद्धतरवे गम्भीरे सैन्यसागरे ।
स्वैश्चापि समुपेतस्य विक्रान्तस्य तथा रणे ।
सत्यकेन कथं योग्यः संग्रामस्ते भविष्यति ।

---

M1.2.5 विभो ( for प्रभो ). — ( L. 4 ) Dn2 D2.3.5.6 जानन्नेव ( D3.6 °न्नपि ) हृषीकेशं ( for the prior half ). Dn2 D5 पांडवं ; D3.6 केशवं ( for मूढवत् ). D2 मानमंस्थाश्च केशवं ( for the post. half ). — ( L. 5 ) Dn2 D2.3.5.6 संग्रामाणां हि ( D2 च ) ( for रणानामसि ). M3.4 धर्मज्ञ. D2 M5 -शस्त्रास्त्र- ( for -शास्त्रार्थ- ). M3.4 -पारग. — ( L. 6 ) D6 धर्मम् ( for [अ]ध° ). G1.4 M1.2.5 हि मुह्यसि ; G5 M3.4 विमुह्यसि ( for हि मुह्यसे ). T G2.3 अजानंश्चैव मुह्यसि ( for the post. half ). — ( L. 7 ) Dn2 D3.5.6 युध्यंति ; G4 युध्यंते ( for युध्यन्ते ). D3.6 सर्वान् ( for शत्रून् ). D2 युध्यंति रक्षिताः शत्रून् ( for the prior half ). D5 स्वस्थैः ( for स्वैः स्वैः ). Dn2 D5 नराः ( for नृप ). — ( L. 9 ) Dn2 D2.3.5.6 ते च ( D6 चै ) बाहुं स( D2.5.6 °हुस )माश्रिताः ( for the post. half ). — ( L. 10 ) Dn2 D2.3.5.6 स कथं ( for अहं हि ). G1 M1.2.5 सत्यकं ( for सात्यकिं ). D3.6 सखि- ( for सुख- ). D2 सखिसंबंधिनं च हि ; S सहा( G1 M1.2.5 °खा )यं बांधवं तथा ( for the post. half ). — ( L. 11 ) M3.4 मदर्थं ( for °र्थे ). Dn2 D3.5.6 अस्मदर्थे ( D3.6 °र्थं ) च युध्यंतं ( for the prior half ). — Dn2 D2.3.5.6 om. lines 13–14. — ( L. 13 ) G3-5 निकृत्यमाणं. — ( L. 14 ) G1 यत्त्वा ( for त्वया ). G1 M1.2.5 विकृष्यमाणं ( for निकृष्य° ). — ( L. 15 ) T G2-5 M5 च त्वं ; G1 M ( M5 *sup. lin.* ) त्वया ( for चात्मा ). Dn2 D2.3.5.6 वै ( for हि ). Dn2 D3.5.6 राजन् ( for एको ). D2 आपद्गतेन ( for रणग° ). G2.3.5 M वै ( for हि ). — ( L. 16 ) Dn2 D5 युज्यते ( for युध्यते ). Dn2 D5 [ऽ]र्थेषु ; D3.6 [ऽ]र्थे तु ( for ऽर्थाय ). D2 आपत्सु ये च युध्यंते ( for the prior half ). Dn2 D5 स वै रक्ष्यो ; D2 ते वै रक्ष्या ; D3.6 स वै नान्यो ( for स संरक्ष्यो ). — ( L. 17 ) Dn2 D2.3.5.6 रक्ष्यमाणैः ; T G3.4 द्रक्ष्यमाणः ( for रक्ष्य° ). D3 स्म नृपो ; D6 स्म नृपा ( for स नृपो ). D6 रक्षितव्या ( for रक्षितव्यो ). — ( L. 18 ) G1 M सत्यकं ( for सात्यकिं ). Dn2 D2.3.5.6 पश्ये ( for दृष्ट्वा ). Dn2 D2.3.5.6 वध्यमानं महारणे ( for the post. half ). — ( L. 19 ) Dn2 D5 तस्य ( for तेन ). Dn2 D2.3.5.6 वियोगेन ( for °गश्च ). G3-5 प्राप्तं ( for प्राप्यं ). Dn2 D5 पापं मेनर्थतो भवेत् ; D2 पापं ननु कथं मम ; D3.6 पापं न कथमेव मे ( for the post. half ). — ( L. 20 ) G3 सखा ( for स च ). Dn2 D3.5.6 तस्मात्क्रुध्यसि किं मयि ( for the post. half ). — Dn2 D2.3.5.6 om. line 21. — ( L. 22 ) Dn2 D5 M1.2.5 मे ; D6 M3.4 मा ( for मां ). D5 अल्पेन ; T G2-5 कृष्णेन ; G1 M विष्णुना ( for अन्येन ). D2.3.6 संगतः. — ( L. 23 ) G1 M संगतं ; G4 संयुगं ( for संगमं ). Dn2 D2.3.5.6 अहं त्वया विनिक्र( Dn2 D6 °ह )तम् ( for the prior half ). Dn2 D2.3.5.6 मे ( for ते ). — ( L. 24 ) D2 कवची त्वं धनुष्मांश्च ( for the prior half ). D2 रथे ( for रथं ). D2 मया ( for स्वयम् ). — For lines 24–25, S subst.:

आबद्धकवचस्येह रथमारुह्य तिष्ठतः ।
सर्वायुधैरुपेतस्य प्रतियोद्धृप्रतीक्षिणः ।

— ( L. 26 ) S स्व( G1 M अ )सित्रथगजानीके ( for the prior half ). G5 damaged for the post. half. — ( L. 27 ) G5 *हनादोद्धतावेगं ( for the prior half ). — ( L.

बहुभिः सह संगम्य निर्जित्य च महारथान् । [30]
श्रान्तश्च श्रान्तवाहश्च क्षीणसर्वायुधस्त्वया ।
ईदृशं सात्यकिं संख्ये निर्जित्य च महारथम् ।
अधिकं त्वं विजानीषे तथाप्यन्यमना भवान् ।
यदिच्छसि शिरश्चास्य असिना हर्तुमाहवे ।
तथा कृच्छ्रगतं दृष्ट्वा सात्यकिं कः क्षमिष्यति । [35]
त्वं तु गर्हय चात्मानमात्मानं यो न रक्षसि ।
कथं करिष्यसे वीर यो वा त्वां संश्रयेज्जनः ।
आत्तशस्त्रस्य हि रणे वृष्णीपुत्रं जिघांसतः ।
छिन्नवान्यदहं बाहुं नैतल्लोकविगर्हितम् ।
न्यस्तशस्त्रस्य हि पुनर्विकलस्य विवर्मणः । [40]
अभिमन्योर्वधं तात धार्मिकः को नु पूजयेत् ।

## 14

After 7. 118. 26, S ins. :

दुर्योधनस्य क्षुद्रस्य न प्रमाणे च तिष्ठतः ।
सौमदत्तेरयं साधु सर्वसाहाय्यकारिणः ।
अस्मदीया मया रक्ष्याः प्राणबाध उपस्थिते ।
ये मे प्रत्यक्षतो वीरा हन्येरन्निति मे मतिः ।
सत्यकश्च वशं नीतः कौरवेण महात्मना । [5]
ततो मयैतच्चरितं प्रतिज्ञारक्षणं प्रति ।

संजय उवाच ।

पुनश्च कृपयाविष्टो बहु तत्तद्विचिन्तयन् ।
उवाच चैनं कौरव्यमर्जुनः शोकपीडितः ।
धिगस्तु क्षत्रधर्मं तु यत्र त्वं पुरुषेश्वरः ।
अवस्थामीदृशीं प्राप्तः शरण्यः शरणप्रदः । [10]
नातिभारः कृतान्तस्य विद्यते कुरुनन्दन ।
यत्र त्वं पुरुषव्याघ्रः प्राप्तः पापामिमां दशाम् ।
नात्मनः सुकृतस्यास्य फलं वै नृपसत्तम ।
यत्र त्वं कुरुशार्दूल प्राप्तः पापामिमां दशाम् ।
रौरवं नरकं भीमं गमिष्यति सुयोधनः । [15]
यत्कृते नरशार्दूलः प्राप्तः पापामिमां दशाम् ।

---

28) G4.5 M4 विश्रमस्य ( for विक्रान्तस्य ). Dn2 D2.3.5.6 स्वैः परैश्च समेतेभ्यः ( D2 °मभ्येत्य ) सात्वतेन च संगमे ( Dn2 °ते ). — ( L. 29 ) T G3.4 सात्यकेन ; G2 M4 सात्वतेन ( for सत्यकेन ). Dn2 D5 एकस्यैकेन हि कथं ; D2 एकैकस्य न हि कथं ; D3.6 एकैकस्य हि कथं ( for the prior half ). Dn2 D2.3.6 सं- ; D5 स ( for ते ). — Line 30 is partly damaged in G5. — ( L. 31 ) D3.6 आगतः ( for श्रान्तश्च ). G5 क्षीणाः ; M1–3 क्षीणः ( for क्षीण- ). Dn2 D2.3.5.6 विमनाः शस्त्रपीडितः ( for the post. half ). — ( L. 32 ) S समेतः ( for ईदृशं ). T G2–5 M3.4 सात्यकिः ; G1 M1.2 सत्यकं ; M5 सत्यकः ( for सात्यकिं ). G1.3–5 M1.2 संखे ; M3.4 संधे ( for संख्ये ). S निर्जितश्च महारथः ( for the post. half ). — ( L. 33 ) T G2–4 त्वां ; G1 M त्वा ( for त्वं ). G1.3 M1.2.5 विजानामि ; G4 न जानामि ; M3.4 [अ]नुजानामि ( for विजानीषे ). D2 अविनीतः शिरच्छेत्तुं ; D3.6 विरथं शस्त्रहीनं तं ; G5 अधिकं चापि जानामि ( for the prior half ). M1.2.5 [अ]भवं ( for भवान् ). Dn2 D3.5.6 स्ववीर्यवशमागतं ( Dn2 °ते ) ; D2 प्रवृत्तो वशमागतं ( for the post. half ). — ( L. 34 ) D2 यदा वक्षसि शिष्यस्य ( sic ) ; S इच्छसि त्वं शिरस्तस्य ( for the prior half ). Dn2 D5 हंतुम् ; D2 हर्तुर् ( for हर्तुम् ). — ( L. 35 ) Dn2 D2.5.6 चैव ( for दृष्ट्वा ). D3 तथाप्यापद्गतं चैव ( for the prior half ). G1 M1.2.5 सत्यकं ( for सात्यकिं ). — ( L. 36 ) G5 वा ( for च ). Dn2 D3.5.6 त्वं वै ( D3.6 मां ) विगर्हयात्मानम् ; D2 त्वं तु वै गर्हयात्मानम् ( for the prior half ). G3.4 स्वधर्मं ( for आत्मानं ). D3.6 रक्षति ( for °सि ). D5 यो न रक्षसि संयुगे ( for the post. half ). — ( L. 37 ) T G2.3 M3.4 रक्षिष्यसे ( T1 °ते ) ; G1 M1.2 संरक्ष्यते ; M5 न रक्ष्यते ( for करिष्यसे ). D3 येस्त्वं ( sic ) ( for वीर ). D2 ये वा त्वा शिश्रियुर्जनाः ; D3.6 ये वा त्वां संश्रया जनाः ; T G2–5 ये वै त्वां संश्रिता जनाः ; G1 M यो वै त्वां ( M5 त्वा ) संश्रितो जनः ( for the post. half ). — Dn2 D2.3.5.6 om. lines 38–41. — ( L. 38 ) G1 M वृष्णीवीरं ( for °पुत्रं ). — ( L. 39 ) G1 M लोके ( for लोक- ). — ( L. 40 ) T G3 च ( for हि ). T G2–4 विरथस्य ( for विकलस्य ).

14

G3.4 om. lines 1–4. — ( L. 1 ) T G2.3 अप्रमाणे ( for न प्र° ). M4 [ऽ]च- ( for च ). — ( L. 2 ) G1 M1.2.4.5 कथं ( for अयं ). T G5 साधुः ( for साधु ). G1 M5 सर्वे ( for सर्व- ). M1.2 सर्वे साहाय्यकारणाः ; M3.4 सर्वे ते साह्यकारिणः ( for the post. half ). — ( L. 5 ) G2 सात्यकिश् ; G3–5 सात्यकश् ( for सत्य° ). T G2.4 M3.4 वधं ( for वशं ). T G2.3 om. the ref. — ( L. 8 ) G1 प्रोवाच ( for उवाच ). — Before line 9, M3.4 ins. अर्जुनः. — ( L. 9 ) M3.4 हि ( for तु ). M3.4 यत्त्वं हि ( for यत्र त्वं ). T G2 M3.4

को हि नाम पुमाँल्लोके मादृशः पुरुषोत्तम ।
प्रहरेत्त्वद्विधे त्वद्य प्रतिज्ञा यदि नो भवेत् ।

15

After 1004*, B Dc1 Dn1 D3 ins. :

ततः क्रुद्धो महाबाहुरैन्द्रमस्त्रं दुरासदम् ।
प्रादुश्चक्रे महाराज त्रासयन्सर्वभारतान् ।
ततः शराः प्रादुरासन्दिव्यास्त्रप्रतिमन्त्रिताः ।
प्रदीप्ताश्च शिखिमुखाः शतशोऽथ सहस्रशः ।
आकर्णपूर्णनिर्मुक्तैरजस्यर्काशुनिभैः शरैः । [5]
नभोऽभवत्तद्दुष्प्रेक्ष्यमुल्काभिरिव संवृतम् ।
ततः शस्त्रान्धकारं तत्कौरवैः समुदीरितम् ।
अशक्यं मनसाप्यन्यैः पाण्डवः संभ्रमन्निव ।
नाशयामास विक्रम्य शरैर्दिव्यास्त्रमन्त्रितैः ।
नैशं तमोंऽशुभिः क्षिप्रं दिनादाविव भास्करः । [10]
ततस्तु तावकं सैन्यं दीप्तैः शरगभस्तिभिः ।
आक्षिपत्पल्वलाम्बूनि निदाघार्क इव प्रभुः ।
ततो दिव्यास्त्रविदुषा प्रहिताः सायकांशवः ।
समाप्लवन्द्विषत्सैन्यं लोकं भानोरिवांशवः ।
तथापरे समुत्सृष्टा विशिखास्तिग्मतेजसः । [15]
हृदयान्याशु वीराणां विविशुः प्रियबन्धुवत् ।
य एनमीयुः समरे त्वद्योधाः शूरमानिनः ।
शलभा इव ते दीप्ता अग्निं प्राप्य ययुः क्षयम् ।
एवं स मृद्नञ्शत्रूणां जीवितानि यशांसि च ।
पार्थश्चचार संग्रामे मृत्युर्विग्रहवानिव । [20]
सकिरीटानि वस्त्राणि साङ्गदान्विपुलान्भुजान् ।
सकुण्डलयुगान्कर्णान्केषांचिदहरच्छरैः ।
सतोमरान्गजस्थानां सप्रासान्हयसादिनाम् ।
सचर्मणः पदातीनां रथिनां च सधन्वनः ।
सप्रतोदान्नियन्तॄणां बाहूंश्चिच्छेद पाण्डवः । [25]
प्रदीप्तोग्रशरार्चिष्मान्बभौ तत्र धनंजयः ।
सविस्फुलिङ्गाग्रशिखो ज्वलन्निव हुताशनः ।
तं देवराजप्रतिमं सर्वशस्त्रभृतां वरम् ।
युगपद्दिक्षु सर्वासु रथस्थं पुरुषर्षभम् ।
दर्शयन्तं महास्त्राणि प्रेक्षणीयं धनंजयम् । [30]
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनादिनम् ।
निरीक्षितुं न शेकुस्ते यत्नवन्तोऽपि पार्थिवाः ।
मध्यंदिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
दीप्तोग्रसंभृतशरः किरीटी विरराज ह ।
वर्षास्विवोदीर्णजलः सेन्द्रधन्वाम्बुदो महान् । [35]
महास्त्रसंप्लवे तस्मिञ्जिष्णुना संप्रवर्तिते ।
सुदुस्तरे महाघोरे ममज्जुर्योधपुंगवाः ।
उत्कृत्तवदनैर्देहैः शरीरैः कृत्तबाहुभिः ।
भुजैश्च पाणिनिर्मुक्तैः पाणिभिर्व्यङ्गुलीकृतैः ।
कृत्ताग्रहस्तैः करिभिः कृत्तदन्तैर्मदोत्कटैः । [40]
हयैश्छिन्नखुरग्रीवै रथैश्च शकलीकृतैः ।

---

पुरुषेश्वर. —(L. 10) M6 शरणप्रद (for °प्रदः). —(L. 12) G1 M पुरुषव्याघ्र. — G1 M1.2 om. (hapl.) lines 13–14. —(L. 13) M3.4 न नूनं (for नात्मनः). —(L. 16) G1 M नरशार्दूल. —(L. 17) G1 M1.2 पुरुषोत्तमः.

15

(L. 1) Dc1 Dn1 पार्थो (for क्रुद्धो). —(L. 4) B1 प्रदीप्ताग्राः (for °प्ताश्च). —(L. 8) B6 असह्यं (for अशक्यं). —(L. 12) D3 निदाघेर्क (for निदाघार्क). —(L. 14) Dc1 समाप्लुवन्; D3 °वृण्वन् (for °प्लवन्). —(L. 15) B4 Dn1 अथ (for तथा). —(L. 18) B5 सलभा (for श°). Bom. ed. दीप्तम् (for दीप्ता). —(L. 19) B4 शूराणां (for शत्रूणां). —(L. 22) D3 -युतान् (for -युगान्). D3 अहनत् (for °रत्). —(L. 24) B1.6 Dn1 सवर्मणः (for सच°). B1 सवर्मणः; B5 Dn1 सधन्विनः (for सधन्वनः). D3 रथिनां सशरं धनुः (for the post. half). —(L. 28) B5 शर- (for सर्व-). —(L. 30) Bom. ed. निक्षिपंतं (for दर्शयन्तं). —(L. 31) Dc1 D3 -नादितं (for °नम्). —(L. 32) Dn1 निरक्षितुं (for निरी°). B2 पांडवं (for पार्थिवाः). — After line 32, B2 ins. :

न शेकुः सर्वसैन्यानि पाण्डवं प्रतिवीक्षितुम् ।
प्रसृतांस्तस्य गाण्डीवाच्छरव्रातान्महात्मनः ।
संग्रामे समपश्याम हंसपङ्क्तीरिवाम्बरे ।
विनिवार्य स वीराणामस्त्रेणास्त्राणि सर्वशः ।

—(L. 34) Dc1 Dn1 -संहित-; D3 -संहत- (for -संभृत-). —(L. 37) Dn1 युधि (for योध-). —(L. 38) B5 गत- (for कृत्त-). —(L. 41) B4.5 D3 च विधुर- (for

निकृत्तान्त्रैः कृत्तपादैस्तथान्यैः कृत्तसंधिभिः ।
निश्चेष्टैर्विस्फुरद्भिश्च कूजद्भिश्च सहस्रशः ।
मृत्योराघातललितं तत्पार्थायोधनं महत् ।
अपश्याम महीपाल भीरूणां भयवर्धनम् । [ 45 ]
आक्रीडमिव रुद्रस्य पुराभ्यर्दयतः पशून् ।
गजानां क्षुरनिर्मुक्तैः करैः सभुजगेव भूः ।
क्वचिद्भौ स्रग्विणीव वक्त्रपद्मैः समाचिता ।
विचित्रोष्णीषमुकुटैः केयूराङ्गदकुण्डलैः ।
स्वर्णचित्रतनुत्रैश्च भाण्डैश्च गजवाजिनाम् । [ 50 ]
किरीटशतसंकीर्णा तत्र तत्र समाचिता ।
विरराज भृशं चित्रा मही नववधूरिव ।
मज्जामेदःकर्दमिनीं शोणितौघतरङ्गिणीम् ।
मर्मास्थिसिरगाधां च केशशैवलशाद्वलाम् ।
शिरोबाहूपलतटां रुग्णक्रोडास्थिसंकटाम् । [ 55 ]
चित्रध्वजपताकाढ्यां छत्रचापोर्मिमालिनीम् ।
विगतासुमहाकायां गजदेहासिसंकुलाम् ।
रथोडुपशताकीर्णां हयसंघातरोधसम् ।
रथचक्रयुगेषाक्षकूबरैरतिदुर्गमाम् ।
प्रासासिशक्तिपरशुविशिखाहिदुरासदाम् । [ 60 ]
बलकङ्कमहानक्रां गोमायुमकरोत्कटाम् ।
गृध्रोदग्रमहाग्राहां शिवाविरुतभैरवाम् ।
नृत्यत्प्रेतपिशाचाद्यैर्भूतैः कीर्णां सहस्रशः ।
गतासुयोधनिश्चेष्टशरीरशतवाहिनीम् ।
महाप्रतिभयां रौद्रां घोरां वैतरणीमिव । [ 65 ]
नदीं प्रवर्तयामास भीरूणां भयवर्धिनीम् ।
तं दृष्ट्वा तस्य विक्रान्तमन्तकस्येव रूपिणः ।
अभूतपूर्वं कुरुषु भयमागाद्रणाजिरे ।
तत आदाय वीराणामस्त्रैरस्त्राणि पाण्डवः ।
आत्मानं रौद्रमाचष्ट रौद्रकर्मणि निष्ठितः । [ 70 ]
ततो रथवरान्राजन्नभ्यतिक्रामदर्जुनः ।

## 16

K1 B Dc1 Dn D2.3 ins. after 7. 121. 15 : D1 after 14ab : D5 after 16cd :

एष मध्ये कृतः षड्भिः पार्थ वीरैर्महारथैः ।
जीवितेप्सुर्महाबाहो भीतस्तिष्ठति सैन्धवः ।
एतानिर्जित्य रणे षड्रथान्पुरुषर्षभ ।
न शक्यः सैन्धवो हन्तुं ततो निर्व्याजमर्जुन ।
योगमत्र विधास्यामि सूर्यस्यावरणं प्रति । [ 5 ]
अस्तं गत इति व्यक्तं द्रक्ष्यत्येकः स सिन्धुराट् ।
हर्षेण जीविताकाङ्क्षी विनाशार्थं तव प्रभो ।
न गोप्स्यति दुराचारः स आत्मानं कथंचन ।
तत्र छिद्रे प्रहर्तव्यं त्वयास्य कुरुसत्तम ।
व्यपेक्षा नैव कर्तव्या गतोऽस्तमिति भास्करः । [ 10 ]
एवमस्त्विति बीभत्सुः केशवं प्रत्यभाषत ।

---

छिन्नखुर- ). — ( L. 42 ) B2. 3 Dc1 Dn1 निष्कीर्णान्त्रैः ( for निकृत्तान्त्रैः ). D3 कृत्तमूर्द्धभिः ( for °संधिभिः ). — ( L. 43 ) B2. 5 शतशोथ ( for कूजद्भिश्च ). — ( L. 44 ) D3 नृत्यो-राक्रीडननिभं ( for the prior half ). — B5 om. line 45. — ( L. 47 ) B1. 5 खुर- ( for क्षुर- ). — ( L. 48 ) Dn1 सक्थिणीव ( for स्रग्वि° ). — ( L. 52 ) B4 transp. भृशं and मही. — After line 53, D3 reads line 61. — ( L. 54 ) Dn1 चर्मास्थिभिर् ( for मर्मा° ). Dc1 Dn1 -शाड्वलां ( for -शाद्वलाम् ). — ( L. 55 ) Dc1 Dn1 रुक्म- ( for रुग्ण- ). Dn1 -संकुलां ( for -संकटाम् ). — ( L. 56 ) Dn1 छिन्न- ( for छत्र- ). — ( L. 59 ) B -युगेशाक्ष- ( for °षाक्ष- ). — ( L. 60 ) B1–4 D3 -शात- ( for -शक्ति- ). — ( L. 61 ) Dn1 बलाहक- ( for बलकङ्क- ). B -मकरोत्करां ; D3 °त्वनां ( for °त्कटाम् ). — ( L. 63 ) Dn1 भूताकीर्णां ( for भूतैः कीर्णां ). — ( L. 67 ) Dc1 तद् ( for तं ). — ( L. 69 ) B5 विनिवार्य शरीराणाम् ( for the prior half ). B5 अंत्रैर् ( sic ) ( for अस्त्रैर् ). — ( L. 70 ) Bom. ed. [अ]धिष्ठितः ( for नि° ). — ( L. 71 ) B ( except B2 ) अत्यतिक्रामद् ( for अभ्यति° ).

16

D5 om. lines 1–2. — ( L. 3 ) B6 D3 पुरुषर्षभान्. — ( L. 4 ) D5 शक्योथ ( for न शक्यः ). Dc1 यत्तो ( for ततो ). D5 अर्जुनं. K1 D1 यत्नवान्भव फाल्गुन ; Dn2 D2 यत्तो विव्याध चार्जुन ( for the post. half ). — ( L. 6 ) Dc1 इव ( for इति ). Dc1 Dn1 अर्क ( for एकः ). — ( L. 7 ) B5 विनाशाय ; D1 विनाशार्थे ( for °शार्थं ). — ( L. 8 ) B5 स सार्थानां ; D5 स्वमा- ( for °शार्थं ). — ( L. 9 ) B2 तु ; D2 स ; त्मानं ( for स आ° ). — D5 om. lines 16–85. D5 [अ]स्तौ ( for [अ]स्य ). — ( L. 16 ) D2 तव ( for रविम् ). — ( L. 17 ) B4 तथा ( for तदा ). B5 तत्रास्यक्त्रानि ते * ( for the prior half ).

ततोऽसृजत्तमः कृष्णः सूर्यस्यावरणं प्रति ।
योगी योगेन संयुक्तो योगिनामीश्वरो हरिः ।
सृष्टे तमसि कृष्णेन गतोऽस्तमिति भास्करः ।
त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप । [ 15 ]
ते प्रहृष्टा रणे राजन्नापश्यन्सैनिका रविम् ।
उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः ।
वीक्षमाणे ततस्तस्मिन्सिन्धुराजे दिवाकरम् ।
पुनरेवाब्रवीत्कृष्णो धनंजयमिदं वचः ।
पश्य सिन्धुपतिं वीरं प्रेक्षमाणं दिवाकरम् । [ 20 ]
भयं विपुलमुत्सृज्य त्वत्तो भरतसत्तम ।
अयं कालो महाबाहो वधायास्य दुरात्मनः ।
छिन्धि मूर्धानमस्याशु कुरु साफल्यमात्मनः ।
इत्येवं केशवेनोक्तः पाण्डुपुत्रः प्रतापवान् ।
न्यवधीत्तावकं सैन्यं शरैरर्काग्निसंनिभैः । [ 25 ]
कृपं विव्याध विंशत्या कर्णं पञ्चाशता शरैः ।
शल्यं दुर्योधनं चैव षड्भिः षड्भिरताडयत् ।
वृषसेनं तथाष्टाभिः षष्ट्या सैन्धवमेव च ।
तथैवान्यान्महाबाहुस्त्वदीयान्पाण्डुनन्दनः ।
गाढं विद्ध्वा शरै राजञ्जयद्रथमुपाद्रवत् । [ 30 ]
तं समीपस्थितं दृष्ट्वा लेलिहानमिवानलम् ।
जयद्रथस्य गोप्तारः संशयं परमं गताः ।
ततः सर्वे महाराज तव योधा जयैषिणः ।
सिषिचुः शरधाराभिः पाकशासनिमाहवे ।
संछाद्यमानः कौन्तेयः शरजालैरनेकशः । [ 35 ]
अक्रुध्यत्स महाबाहुरजितः कुरुनन्दनः ।
ततः शरमयं जालं तुमुलं पाकशासनिः ।
व्यसृजत्पुरुषव्याघ्रस्तव सैन्यजिघांसया ।
ते हन्यमाना वीरेण योधा राजन्रणे तव ।
प्रजहुः सैन्धवं भीता द्वौ समं नाप्यधावताम् । [ 40 ]
तत्राद्भुतमपश्याम कुन्तीपुत्रस्य विक्रमम् ।
तादृङ्न भावी भूतो वा यच्चकार महायशाः ।
द्विपान्द्विपगतांश्चैव हयान्हयगतानपि ।
तथा स रथिनश्चैव न्यहन्रुद्रः पशूनिव ।
न तत्र समरे कश्चिन्मया दृष्टो नराधिप । [ 45 ]
गजो वाजी नरो वापि यो न पार्थशराहतः ।
रजसा तमसा चैव योधाः संछन्नचक्षुषः ।
कश्मलं प्राविशन्घोरं नान्वजानन्परस्परम् ।
ते शरैर्भिन्नमर्माणः सैनिकाः पार्थचोदितैः ।
बभ्रमुश्चस्खलुः पेतुः सेदुर्मम्लुश्च भारत । [ 50 ]
तस्मिन्महाभीषणके प्रजानामिव संक्षये ।
रणे महति दुष्पारे वर्तमाने सुदारुणे ।
शोणितस्य प्रसेकेन शीघ्रत्वादनिलस्य च ।
अशाम्यत्तद्रजो भौममसृक्सिक्ते धरातले ।
आनाभि निरमज्जंश्च रथचक्राणि शोणिते । [ 55 ]
मत्ता वेगवतो राजंस्तावकानां रणाङ्गणे ।
हस्तिनश्च हतारोहा दारिताङ्गाः सहस्रशः ।
स्वान्यनीकानि मृद्नन्त आर्तनादाः प्रदुद्रुवुः ।
हयाश्च पतितारोहाः पत्तयश्च नराधिप ।
प्रदुद्रुवुर्भयाद्राजन्धनंजयशराहताः । [ 60 ]
मुक्तकेशा विकवचाः क्षरन्तः क्षतजं क्षितौ ।

— $B_5$ om. (hapl.) lines 19–20. — (L. 20) $Dc_1$ $Dn_1$ संख्ये (for वीरं). — (L. 21) $K_4$ $Dn_2$ $D_{1.2}$ भयं हि ($K_4$ भयेन) विप्रमुच्यैतत् (for the prior half). — (L. 26) $D_3$ पंचशता. — (L. 27) $Dn_1$ एतान् (for the second षड्भिर्). — $K_1$ om. lines 28–30. — (L. 29) $Dn_2$ $D_2$ च; $D_1$ [अ]स्मान् (for [अ]न्यान्). $D_1$ सर्वान्वै (for त्वदीयान्). — $B_4$ om. lines. 33–36. — (L. 37) $Dn_1$ $D_2$ तुमलं (for तुमुलं). — (L. 40) $B_5$ समौ (for समं). $K_4$ $D_{1.2}$ नाभ्यधावतां (for नाप्य°). — (L. 44) $Dc_1$ $Dn_1$ $D_1$ सारथिनश् (for स रथि°). $K_4$ $D_1$ जघ्ने (for न्यहन्). — (L. 45) $Dn_1$ तत्र न (by transp.). — (L. 47) $Dn_1$ $D_5$ संछिन्न- (for संछन्न-). — (L. 48) $K_4$ $D_1$ अभ्यजानन्; $B_{1.3}$ $Dn_1$ $D_3$ नाभ्यजा° (for नान्वजा°). $B_4$ पराभवं (for परस्परम्). — (L. 49) $Dn_1$ तैः (for ते). $K_4$ $D_1$ -नोदितैः; $B_5$ $D_{2.3}$ -चोदिताः (for -चोदितैः). — (L. 53) $K_4$ अनलस्य (for अनि°). — (L. 54) $D_1$ अशाम्यत (for अशाम्यत्तद्). $D_3$ संसक्तिने (for असृक्सिक्ते). $D_1$ असृक्क्लिन्ने च धरातले (hypermetric) (for the post. half). — (L. 56) $Dn_1$ तत्र (for मत्ता). $B_1$ $D_2$ वेगवतां; $B_{2.3.5}$ $Dn_2$ वेगवता (for °वतो). B रणांगने (for रणाङ्गणे). — (L. 57) $B_5$ ते (for च). — $B_2$ .om. lines 61–64. — (L. 61) $Dn_2$ $D_2$ क्षतैः (for क्षितौ). — (L. 62) $B_1$ अपलायंत; $B_4$ $Dn_2$ $D_5$ प्रापला° (for प्रपला°).

